६३ प्रभ्रश्यच्छ्रुति-मस्तकः प्रविगलत्सद्वर्ण-विप्र-स्थिति-
र्नश्यत्-स्वाङ्ग-बलः प्रनष्ट-वचन-प्राग्भार-पूर्ण-स्मृतिः ।
वृद्धोऽत्यन्तमयं[1] स्वयं कलि-महा-म्लेच्छेन निर्मूलितो
धर्मः सम्प्रति चाल्यते तव करालम्बेन[2] भूमीपते ॥५॥गौर्याः ॥

६४ नालिङ्गन्ति पयोधरौ भवदिभ-प्रोत्तुङ्ग-कुम्भ-स्थल-
भ्रान्त्या वेणि-तले तु नैव (fal. 6b) दधति प्रीतिं तवासि-
भ्रमात् ।
भ्रू-भङ्गाद्भवदीय-दुर्धर-धनुर्भ्रान्त्याऽरिभूमीभुजः
कान्तानां सह-संगमेऽपि विधुरा भूमण्डलाखण्डल ॥६॥
वाहिनीपतेः ॥

verse, the words have been so used that if ihe first letters are dropped, they mean some drawbacks on the part of the enemy of the king. Whereas the king Vīrasimha, patron of Rāmacandra Bhaṭṭa, is sparkling with divine glow, the enemy reflects an oscillating mood and so on. Thus the enemy is कुण्ठाभः, मल-युत-शिराः, जराक्लिष्टदृष्टिः, दण्डोदार-नामा, मित-परिजनो (on account of poverty), श्व-विख्यात-कीर्तिः (i.e. as ignoble as a dog), दर्यासक्त-चित्तः (i.e. living in a mountain-cave), मरणा-विजयः and कणाहार-युक्तः। SS. 45, v. r. नामाऽप्यमित...c. समरणा-विजयो···।

६३। 1 MS. वृद्धोत्पन्तोत्मयं। 2 MS. करावलम्बेन।

६४। 1 S'p. 1243; SRB. v. 200, p. 108, v. r. a. कुच-द्वयं ···कुम्भद्वय···b. तासादवेणि-लतासु···c. भ्रू-भङ्गान् भवदीय···भ्रान्त्या भजन्ते न ते; d. वैरि-क्षौणिभुजो निजाम्बुज-दृशां...।

॥ (३) अथ प्रतापः ॥

६५ हे गौरि ! ब्रूहि रम्भे ! कनकमय-नदीमेहि, लीलावगाह-
ब्रह्माण्डानन्द-मुग्धे ! कनकमय-नदी कुत्र ? कियं प्रयाति ?
वीरश्रीवीरभानु-क्षिति-तिलक-कुल-स्तम्भ-चञ्चत्-प्रताप-
ज्वाला-कल्लोल-ताप-द्रुत-कनक-गिरि-स्यन्द-धारा-प्रवाहः ॥१॥

६६ वेलामुल्लङ्घ्य हेला-दलित-धरणिभृद्वाहिनी-कोटि-पूरै-
रुद्वेल्लत्-काविलेन्द्र-प्रबल-जलनिधिः प्लावनायोज्जजृम्भे[1]।
स्यान्मग्ना मेदिनीयं प्रबल-भुज-बल-प्रौढ-तच्चन्द्रहास-
ज्वालाभिः सन्ततं चेद्दहति न वडवा-वीतिहोत्रो वघेलः[2]॥२

६७ वदन्तु देव तावकं प्रतापमेव पावकं
महा-तुषार-शीतलं वदाम हे[1] वयं यतः ।
सुमेरु-कन्द[2]रान्तरे स्थितो गृहीत-कम्बल-[3]
स्तवारि-भूप-नायकः प्रकम्पते मुहुर्मुहुः[4] ॥३॥
अकबरी-कालिदासस्यैते ॥

---

For the verse and its translation, see Sanskrit Poetesses, Part A, pp. 8 and 76.

६६ । 1 MS. योग्रमंजृम्भे । 2 For वघेलकुलकमलप्रद्योतप्रचण्ड-मार्तण्ड-महाराजकुमारजैलसिंह०, see MS. No. 6468, of RASB. Tantra volume. Also quoted : PT. 72 ; SS. 121.

६७ । 1 MS. से । 2 MS. न्न । Out of fear the enemy of the king now resides in a cave of Mount Sumeru. 3 He is so poor and helpless that he possesses nothing else. 4 On account of pinching cold.

Also quoted : SS. 107, v. r. c. सुमेरु-कन्दरोदर···

६८ लङ्का-धामनि वीरभानु-नृपतेः प्रे क्ष्य[1] प्रतापोदयं
प्रत्यागारमधीर-नीरजदृशो भूयो हुताश-भ्रमात् ।
क्षुभ्यद्वाणि विधूत-पाणि विगलन्मुक्ता-मणि प्रस्खलद्-
बाष्प-श्रेणि विधूत-वेणि दयितं श्लिष्यन्ति कण्ठ-स्थले ॥४॥

६९ क्षोणीकाम (fol. 7a) **निजामशाह**[1] भवतः प्रौढ-
प्रतापानलै-
र्द्रागिव द्रव-रूपतामुपगते चामीकराणाञ्चये ।
भ्रश्यद्वासव-[2]धाम-धोरणि मुहुर्मज्जद्ग्रहग्रामणि[3]
त्रस्यत्कामिनि निष्पतद्वनि तलं मेरोः समुन्मीलति ॥५॥
भानुकरस्यैतौ ॥

७० पुष्यत्-प्रौढतर-प्रताप-तपन-ज्वालावली-व्याकुले
ब्रह्माण्डे मधुसूदनोऽहि-शयने शेते पयः-सागरे ।
शम्भुर्जह्नु-सुतां दधाति शिरसा भूमिस्तुषाराचलं
ताप-व्याकुलितः पतत्यतितरां भानुः समुद्रे मुहुः ॥६॥

---

६८। 1 MS. च। SS. 102, v. r. d. बाष्प-श्रेणि विलोल-वेणि दयितं कण्ठ-स्थले बिभ्रति ।

६९। 1 निजामशाह was the patron king of Bhānukara. 2 MS. र। 3 ग्रहग्रामणी is the Sun. On account of the fire of the prowess of Nizam Shah, the gold of Mount Meru melts and therefore, the misery of its inhabitants knows no bounds.

Also quoted : SS. 105.

७१ वैरि-क्षौणिपति-प्रियाः प्रिय-रत-श्रान्ता मिलल्लोचनो-
न्मेषानन्तरमेव पाणि-कमलं तल्पे निधायोत्थिताः ।
दृष्ट्वाऽकाण्डमचिन्तितोदय[1]-रविं यस्य प्रतापं पुरः
प्रातःकाल-धिया ह्रिया तु कषितास्त्रस्ता निशीथे बभुः[2] ॥७॥

७२ अस्य प्रचण्ड-भुज-दण्ड-भवः कृशानु-
श्चण्डांशु[1]-चण्ड-करजित् सुमहाप्रतापः ।
प्रत्यर्थि-भूपति-पलाश-वनं विदह्य
प्रौढासु दिक्षु बहु-दाहमुरीकरोति ॥८॥

जगज्जीवनस्य ॥

७३ मार्तण्ड-मण्डल-समं भवतः प्रतापं
ये वर्णयन्ति न हि ते कवयः प्रवीणाः ।
अम्भोनिधौ विलयमेति परं पतङ्गः
पारं प्रयाति पुनरेति भवत्-प्रतापः[1] ॥९॥

शङ्कर-मिश्रस्य ॥

७४ स्थाणुः[1] कू[2]र्मोऽत्र यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
तैला(fol. 7b)पूराः समुद्राः कनकगिरिरयं वृत्त-वर्तिप्ररोहः ।

---

७१ । 1 MS. प । 2 MS. चभुः ।

७२ । 1 MS. सु ।

७३ । 1 PT. 73 ; SS. 116, v. r. c....पतन् ( पतङ्गः ) ; d....पुनरेव ( भवेत् )... ।

७४ । 1 MS. णु । 2 MS. क । The verse is quoted from the Mahānāṭaka attributed to Hanumat, vi. 67. Also quoted SS. 106.

अर्चिःखण्डांशु-रोचिर्गगन-मलिनिमा कज्जलं दह्यमाना
भानु-श्रेणी पतङ्गी जयति रघुपते त्वत्प्रताप-प्रदीपः ॥१०॥

हनुमतः ॥

॥ (४) अथ कीर्तिः ॥

७५ कालिन्दी-नर्मदाम्भः-स्रुत-मद-सलिलोत्सङ्गिनौ पुष्पवन्तौ[1]
बिभ्राणः कुम्भ-युग्मं गगन-तल-ततः स्वर्धुनी-पूर-शुण्डः ।
घण्टालः साधु-वादैरनभिमत-यशो देव मृद्नन् मृणालं
कीर्ति-स्तोमाभ्र-कुम्भी जगदुदर-सरःसंभ्रमो बंभ्रमीति ॥१॥

७६ चन्द्रं चन्द्रार्धचूडं चतुरुदधि-चयं चन्द्रिकां चन्द्रकान्तं
चार्वङ्गी-लोचनान्तं चमर-सहचरी-बाल-भारोच्चयं च ।
खर्वीकुर्वन्ति दर्वीकर-तिलकमपि ध्वस्तगुर्वीतिभङ्गि
खर्वीर्थि[1] प्रेषिता रे दलपति-गृहिणि त्वद्यशःस्तोम-सोमाः[2]
॥२॥

७७ विस्फार्य व्योमगङ्गामल-गुरु-लहरी-कैतवात् केसराली-
रुच्चैर्मास्तिक्य-देशे हिमकर-कपटान्मण्डलीकृत्य पुच्छम् ।
दिग्नागारब्ध-झम्पस्तव विशद-यशः-केसरी गुर्जरेन्द्र
ब्रह्माण्डारण्य-वीथी-गिरि-गहन-दरी-संक्रमी चङ्क्रमीति[1]
॥३॥ अकबरी-कालिदासस्यैतौ ॥

---

७५। 1 The Sun and the Moon. SS. 66, v. r. मृन्मल संदधानः ।

७६। 1 MS. सर्वीर्थि । 2 MS. ह ।

७७। 1 SS. 80 v. r. a व्योम-गङ्गा-वलदुरु···b.···रुच्चैर्मस्तिष्क ...C. केसरी कावलिन्द्रः ·d. गिरि-गहन-दरी-संभ्रमी बंभ्रमीति ।

७८ राजेति[1] क्षणदाकरं विजयते दानोरु-लक्ष्मीरिति
स्वर्नागं बहु-वाहिनीपतिरिति क्षीरोदमास्कन्दति ।
दुर्गाधीश इति स्फुटं पुर-रिपुं विद्वेष्टि भोगोद्भट-
श्रीरित्यर्दति वासुकिं स्वयशसा दिल्लीन्द्र-चूडामणिः ॥४॥
वाणीकण्ठाभरणस्य ॥

७९ क(fol. 8a)स्तूरी सितिमानमागतवती[1] शौक्ल्यं गताः कुन्तला
नीलं चोलमभूत् सितं धवलिमा जातो मणीनां गणे ।
ध्वान्तं शान्तमभूत् समं नरपते त्वत्कीर्ति-चन्द्रोदये
त्रैलोक्येऽप्यभिसार-साहस-रसः शान्तः कुरङ्गीदृ[2]शाम्[3] ॥५॥
शंकर-मिश्रस्य ॥

८० वापी पाताल-मूलं जलमुरगनदी कच्छपः स्वच्छ-कन्दः
शेषो नालं दलानां विततिरपि फणाः कर्णिका शैव-शैलः ।
तारास्ताराः परागा मधु च मधुमती केसरा दन्ति-दन्ता-
स्तस्मिंस्त्वत्[1]-कीर्ति-पद्मे भवति मधुकरः शर्वरी-सार्वभौमः
॥६॥ कृष्ण-पण्डितस्य ॥

८१ त्वत्कीर्त्या धवलीकृते त्रिभुवने दामोदराङ्क-स्थिता
सत्या तं हि विमृश्य लाङ्गलभृतं व्रीडा-विनम्राननां ।

---

७८ । 1 MS. वेत्ति । KVS., ii. 10, p. 47.

७९ । 1 MS. त्तौ । 2 MS. द । 3. Also quoted : SS. 81.

८० । 1 MS. no त् । SS. 51, v. r. d. तस्मिन् यत्···।

किञ्चान्यत् कथयामि कौतुकमितः स्वीयाङ्गणे सर्वतो
गुञ्जा-पुञ्जमुदीक्ष्य[1] मौक्तिक-धिया नृत्यन्ति दीनाङ्गनाः[2] ॥७॥
बालाजी-भट्टस्य ॥

८२ स्वर्गङ्गा-चामर-श्रीर्जलनिधि-तनया-वीज्यमानोऽभ्र-वस्त्रो
तारा-मुक्तालि-माला-सुललित-वदन-ज्योतिरुद्योतमानः ।
दिक्पालैः सेव्यमानो दिनकर-मुकुटो चारु-चन्द्रातपत्री[1]
स्वः-कुम्भीन्द्रोपविष्ट[2]स्तव जयति यशश्चक्रवर्ती तु देवान्[3]
॥८॥

८३ यद्बीजानि च मौक्तिकानि करिणां दन्ता यदङ्कुरा
यत्पत्राणि शरद्घना हिमगिरिर्यस्याः प्रकाण्डो
महा(fol.8b)न् ।
यत्पुष्पाणि च तारका हिमरुचिर्यस्याः फलं सुन्दरं
सेयं राजति **राम**-कीर्ति-लतिका ब्रह्माण्ड-भाण्डोदरे[1] ॥९॥

८४ नो ग्लानिं भजते दिने न च सुराधीशैः समापीयते
नो राहुर्ग्रसते न वा मृग-दृशां वक्त्रैः पराजीयते ।
नो मेघैश्च पिधीयते न च कुहू-कालेऽपि संक्षीयते
**श्रीराम**-क्षितिपाल भाति जगति त्वत्कीर्ति-चन्द्रः सदा[1] ॥१०॥
श्रीवेणीदत्तस्य ॥

---

८१। 1 MS. च्च । 2 MS. ना । SS. 52, v. r. b. लाञ्छनभृतं
... c. स्वीयाङ्गणैर (?)...।
८२। 1 MS. इन्द्रातपत्री । 2 MS. प्रविष्ट । 3 MS. त्वदेवां ।
८३। 1 SS. 82, v. r. a. यदीयाङ्कुराः··· ८४। 1 SS. 83

८५ शेषं फूत्कृतिभिः फणीश्वर-गणो गङ्गां तरङ्ग-स्वनै-
धर्मी व्योमगजं सुरेश्वरवरः सद्वृंहितैर्बुध्यति[1] ।
अ[2]स्माभिर्वत बुध्यतां कथमयं स्वामीति तारा व्यधु-
श्चन्द्रे चिह्नमिवाञ्जनैस्त्रिभुवन-भ्रान्तासु यत्-की[3]र्तिषु ॥११॥

८६ स्वर्गे कल्प-द्रुमाधस्तव जयति यशःपुञ्ज-योगेश्वरोऽयं[1]
यं नित्यं देवराजः स्नपयति नियतः कामधुग्दुग्ध-पूरैः ।
यन्मौलौ बिल्व-पत्र-द्युतिमिदममलं व्योम धत्तेऽतिनीलं
चन्द्रः[2] पाटीर-पङ्कं तदुपरि ललितास्तार[3]कास्तण्डुलानि ॥१२॥

८७ यत्कीर्तिः काऽपि गङ्गाऽखिल-मल-निचयं नाशयन्ती गभीरं
क्षीराब्धिं यत्-प्रताप-ज्वलन-कण-गणैः शोषितं पूरयन्ती ।
भूलोकस्यान्तराल-स्फुरदतुल-महादुःख-पापौघ-पङ्कं
भूयः[1] प्रक्षालयन्ती त्रिजगति महिता सौख्यमाविष्करोति[2]
॥१३॥ जगज्जीवनस्यैते ॥

८८ यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति
द्राग् द्रष्टुं रजत-भ्रमेण वणिजो वीथी(fol. 9a)मुपस्कुर्वते ।

८५ । 1 MS. ति । 2 MS. आ । 3 MS. कि ।
८६ । 1 MS. जागेश्वरोऽयं । 2 MS. न्द्र । 3 MS. रि । SS. 53
८७ । 1 MS. भूयश । 2 MS. तु । SS. 54 v. r. b. प्रतापोज्ज्वल···

चञ्चुं चञ्च[1]लयन्ति चन्द्र-किरण-भ्रान्त्या चकोराः[2] पयो-
बुद्ध्या व्योम्नि नियोजयन्ति कलशीमाभोरवामभ्रु[3] वः[4] ॥१४॥
कस्यापि ॥

८९ मन्येऽरण्ये कुल-गिरि-गुहा-गह्वरे पर्यटन्ती
विद्धा दर्भैः किमपि चरणे वासुदेवस्य कीर्तिः[1] ।
इन्दौ कुन्दे कुमुद-मुकुले चामरे चन्दने च[2]
दत्त्वा दत्त्वा मृदुनि पुरतः पादमेषा प्रयाति ॥१५॥गणपतेः ॥

॥ (५) अथ शौर्यौदार्य-प्रधाना कीर्तिः ॥

९० लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासि-यष्ट्यारि-कण्ठे
मातङ्गानामपीहोपरि पर-पुरुषैर्यापतन्ती च दृष्टा ।
तत्-सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु चै[1]वास्मि दत्ता
भृत्येभ्यः श्री-नियोगाद् गदितुमिव गतेवाम्बुधिं यस्य कीर्तिः
॥१॥ दाक्षिणात्यानाम् ॥

---

८८ । 1 MS. चंक । 2 MS. रा । 3 MS. भ्रू । 4 SRB., p. 42, v. 136, v. r. b. द्राक्कर्पूर-रजोभ्रमेण ; कलशीमानीय । PT. 65, v. r. b. द्राक्कर्पूर-रजो...d.···कलशीमानीय···d.··· कलसीराभीर··· । SS. 57, v. r. same as in PT.

८९ । 1 MS. र्ति । 2 MS. चा । SS. 95, v. r. b. विद्धा दन्तैः···

९० । 1 MS. वै । लग्नं रागावृताङ्ग्या :—*SRB*. v. 79, p. 138, v.r. b...पर-पुरुषैर्या च दृष्टा पतन्ती । SSV. v. 2595, p. 444, v.r.

॥ (६) अथ कीर्ति-प्रतापौ ॥

८१ कुञ्जे कुञ्जे भ्रमति भवतः कीर्तिरेकाकिनीति[1]
तस्याः[2] पश्चाद् व्रजति ललितः सानुरागः प्रतापः ।
नैवाऽऽश्लेषो न च रति-कला नाम्बराकृष्टि-लीला
तेनाद्यापि द्वयमतितरां स्फीतमेवाऽऽविरस्ति ॥१॥

शङ्कर-मिश्रस्य ॥

८२ नरप किमपि चित्रं वर्तमानेऽपि युष्म[1]द्-
यशसि[2] शशिनि चञ्चत्त्वत्प्रतापार्क-बिम्बे ।
नयन-कुमुद-वृन्दं त्वद्द्विषत्-सुन्दरीणा-
मपि च लपन-पद्मान्याशु यत् सङ्कुचन्ति ॥२॥

जगज्जीवनस्य ॥

---

b·· सुदृढमपि···। *SS.* v. 64, v. r. b···पतन्तीव...। c...किञ्चास्मि दत्ता। d...गदितुमिति गते चाम्बुधिं···। PT. v. 69, v. r. b··· च दृष्टा पतन्ती। c···तेनास्मि ( दत्ता )। *KS´*. pp. 773-74, v. r, a···सततमिह···। b...च दृष्टा पतन्ती। c···तेनास्मि ( दत्ता )। d··· गतेत्यम्बुधिं···। *Kpradipa*, p. 224, v. r. a···सुचिरमिह···। b, c and d. same as in *KS´*; p. 247, v. r. b, c and d. same as in *KS´*; *SD.* p. 420, v. r. b. and c. same as in *KS´*.

८१। 1 MS. ते। 2 MS. स्या। PT. v. 75, v. r. a··· कीर्तिरेकाकिनीयं। b···पश्चाद भ्रमति भवतः···। c···नो व राश्लेषि- ( लीला )।

८२। 1 MS. पुष्प। 2 MS. शि।

८३ चन्द्रीभूतं जगति सकले त्वद्यश श्चक्रमेत-
हंसी[1]भूतो विलसति पुनस्त्वत्-प्रतापः प्रताप ।
चित्र' मैवं प्रभवति तयोः सङ्गमोऽ(9b)थाप्यमासु
ग्रासोद्यासौ[2] न च पुनरहोरात्र[3]-जन्मा विलासः ॥३॥
वेणी[4]दत्तस्य ॥

॥ (७) अथ द्विषदकी[1]र्तिः ॥

८४ क्षौणीपाल विशाल-भाल भवतः प्रस्पर्धि-वर्गावला-
कीर्त्या श्यामलिते शि[1]वे गण-गणे भीते गुहे कंपिते ।
बिभ्यद्दे[2]व-गणे त्रसत्-फणि-गणे क्षुभ्यत्पिशाची-गणे
क्रोधोत्कम्पित-पाणि-पंकज-तला सा हिङ्गुला पातु नः ॥१॥
श्रीवेणीदत्तानाम्[3] ॥

८५ कालिन्दी[1]यति कज्जलीयति कलानाथाङ्क-मालीयति
व्यालीयत्यहि-मण्डलीयति मुहुः श्रीकण्ठ-कण्ठीयति ।
शैवालीयति कोकिलीयति महानीलाभ्र-जालीयति
ब्रह्माण्डे रिपु-दुर्यश[2]स्तव नृपालंकार[3]-चूडामणे ॥२॥
गौर्याः ॥

---

८३ । 1 MS. सि । 2 MS. सो । 3 MS. अहोरात्रि ।
4 MS. णा ।
८४ । Heading. MS. का ।
1 MS. सि । 2 MS. दे । 3 MS. दत्तनी ।
८५ । 1 MS. दी । 2 MS. शः । 3 MS. वर ।

## ॥ (८) अथ दानम् ॥

९६ राम त्वद्द[1]त्त-मत्तेभ-कुंभ-निःसरदम्बुभिः ।
दिक्षु भिक्षु-गृह-द्वारि वारां निधिरुदञ्चति ॥१॥

अकबरी[2]-कालिदासस्य ॥

९७ एकेनापाति लक्ष्मा पति-वपुषि परेणापि पीतः पिता ते
भ्राताऽन्येनापि शश्वस्त्रिभुवन-तलतोऽन्येन निर्वासिताऽसि ।
सद्यः श्रीवीरभूपस्तृ[1]णमिव मनुते त्वां सरोजालये य-
न्मातस्तज्जातिमात्र-प्रणयिनि मयि तन्मास्म कोपं विदध्याः॥२॥

राजशेखरस्य ॥

९८ यद्दान-गान-व्यसनैक-तान-
स्व-भीरु-भावाम्बु-जलौघ-योगात् ।
शङ्के पशु-प्रस्तर-पादपाना-
मप्य[1]ङ्कुताऽभूद्दिवि दान-शक्तिः ॥३॥

अमरस्य ॥

९९ आदर्शाय शशाङ्क-मण्डलमि(fol. 10a)दं हर्म्याय हेमाचलं
दीपाय द्युमणिं महीमिव कथं नो[1] भिक्षवे दत्तवान् ।

कालिन्दीयति कज्जलो०—See Sanskrit Poetesses, Part A. 2nd edition, v. 18, p. 9.

९६। 1 MS. त्वद। not trs.। 2 MS. अवकरी०।

९७। 1 MSo. मह।

९८। 1 MS. प्यु।

९९। MS. वो।

दित्सा-पल्लवित-प्रमोद-सलि[2]ल-व्यामिश्र-नेत्राञ्चलः[3]
सर्वं श्रीभृगु-भूषणः पुनरिदं न प्रायशो दृष्टवान् ॥४॥

कस्यापि ॥

१०० दाने द्राघीयसि कपटतः स्वस्तटिन्या खटिन्या
रेखामिकां तव कृतवता पुष्करागार-भित्तौ ।
नैव प्रापि क्वचिदपि ततः श्रीनिजाम द्वितीय-
स्तेनाकारि स्थगित-मनसा वेधसा बिन्दुरिन्दुः[1] ॥५॥

भानुकरस्य ॥

१०१ दानं यच्छति भूतलानुपमणौ श्रीमीरमीरात्मजे
दारिद्र्यं व्य[1]गमद्विहायसि महाशून्यत्वतापादकम् ।
चित्रं याचक-दारिका-लवणिमालुब्धो विमुग्धः स्मरोऽ-
नङ्गीभूय तदङ्गने स्तुवति तत्तन्मेखला-शि[2]ञ्जितैः ॥६॥

१०२ कस्तावद्बलि-कर्ण-भार्गव-महादान-प्रमाण-स्तवः
कश्चासौ कुरु-पाण्ड -पाण्डु र-यशः-[1]-प्रस्तावना-विस्तरः ।
यावद्वर्षति वीरसिंह-तनयो वृष्टीरिमाः[2] काञ्चनी-
र्धाराः प्रावृषि तावदञ्जन-रुचिर्धारा न धाराधरः ॥७॥

---

2 MS. सि । 3 MS. नः ।

SRB v. 59, p. 116, v. r. c. सलिल-व्याकीर्ण-नेलाम्बुजो···।

d. जानीमो भृगुनन्दनस्तदखिलं न प्रायशो···।

१०० । 1 MS. दुः ।

१०१ । 1 MS. व्यव० । 2 MS. सि ।

१०२ । 1 MS. शशः । 2 MS. रिमां ।

१०३ आ बाल्याद्देव-[1] बालाः सुर-वर-सदने कि[2]न्नरी-गीयमानं
यन्नामाऽऽकर्ण्य कर्णेऽमरगुरु-वचनोद्गीत-गाथा-निबद्धम् ।
दानौदार्याढ्य-शौर्योदय-विमल-गुणं सर्व-भोगैक-सारं
भर्तारं कामयन्त्यो हरिहर-गृहिणी-पादमाराधयन्ति ॥८॥
श्रीवेणीदत्तस्यैते ॥

॥ (८) अथ नृप-कटाक्षाः ॥

१०४ माद्यद्दं तगण्ड-गण्ड-च्युत(10.b)मद-लहरी-संचरच्चञ्चरीकी-
झंकारानन्द-गीताः कवि-भवन-भुवस्ताः[1] पुरस्ताद्भवन्ति ।
पश्चादश्वन्ति तेषामुपरि करुणया राम-भूपाल-मौले-
रुद्द ल्लहुग्ध-वीची-बहल-धवलिमाबद्ध-कक्षाः कटाक्षाः ॥१॥

१०५ मुक्तालंकारवत्यः कुवलयनयनाः कुम्भिनः कुम्भ-कूट-
भ्रश्य[1]द्दान-प्रवाहाः[2] पवन-जव-जितो दिव्य-काम्बोज-वाहाः ।
प्रासादाश्चन्द्रहासा[3] विलिखित-वियतो भूयसी भूत-धात्री[4]
सूते किं किं न सद्यः फलमभिलषितं राम-दृक्काम[5]धेनुः ॥२॥

१०६ साधूनुच्चैः सृजन्तः प्रणतमनुदिनं संभ्रमात् पालयन्तः
कुर्वन्तो भस्मसाच्च प्रतिनृपति-चमू-मण्डलं लीलयैव ।

---

१०३। 1 MS. द्देव। 2 MS. किं।

१०४। 1 MS. भुवःस्ता।

१०५। 1 MS. भ्रश्य०। 2 MS. ०हा। 3 प्रासादांश्चन्द्रहासान्। 4 MS. भूतधात्रीं। 5 MS. क्काम।

शोण-श्यामावदाताः शुभ-चरित-शरच्चन्द्र-पौलस्त्य-शैल-

श्रीराम त्वत्कटाक्षाः कमलज-वलिजिच्छम्भु-लीलां

भजन्ते ॥३॥ गोविन्द-भट्टानाम् ॥

॥ (१०) अथ पृथ्वी-पालनाद्याचारः ॥

१०७ यस्मिन् राज्ञि महीं प्रशासति सति क्ष्मापाल-माला-मणौ

हिंसा तस्करता श्रुतौ पर-गृहे[1] वेशः खगेन्द्रे ष्वभूत् ।

कुम्भानां गल-बन्धनं च बहुशो वादः परः शास्त्रिणां

रत्नानामतिशूल-वेधन-विधिर्नो वा प्रजानां क्वचित् ॥१॥

१०८ न दूरत-वार्ता न च वर्ण-सङ्करो

न चार्त-नादो न तथेति-विप्लवः ।

यस्मिन् महीं शासति भूमि-शक्रे

कशाहतिर्वाजिषु न प्रजासु ॥२॥

श्रीवेणीदत्तानामितो ॥

१०९ यस्मिन् महीं शास[1]ति वाणिनीनां

निद्रां विहारा[2]र्धपथे गता (fol. 11a ) नाम् ।

वातोऽपि नास्रंसय[3]दंशुकानि

को लम्बयेदाभरणाय हस्तम् ॥३॥ कालिदासस्य ॥

---

१०६ । 1 MS. ०म्भू ।

१०७ । I. MS. ग्रहे ।

१०९ । 1. MS. शास । 2. RagV. ०यार्धं । 3. MS. तासंस्रप० ।

## ॥ (११) अथ प्रस्थानम् ॥

११० जाते युष्मत्-प्रयाणे क्षितितिलक रजोयोग-दोषादशेषा
दिग्योषाः[1] स्नान्ति सद्यस्त्वदरि-नृपवधू-नेत्रनीरापगासु ।
सङ्क्रम्य त्वत्प्रतापैस्तदनु किमु दधौ दोहदं देव तासां
प्राची प्रातः प्रसूते यदियमुरु-महःखण्ड-मार्तण्डबिम्बम्[2] ॥१॥
रामचन्द्रोपाध्यायस्य ॥

१११ त्वयि प्रचलिते विभो तुरग-टाप-टङ्कत्रुट[1]-
द्धरावलय-धूलिभिः सकलमेव कीर्णं नभः ।
दिवाकर-हयावली-निरवलम्ब-सञ्चारज-
श्रमापनयनाय किं वसुमतीयमूर्ध्वं गता ॥२॥
अकबरी-कालिदासस्य ॥

११२ अये यदि समीहसे पर-पुरावरोधं प्रभो
तदाकलय मद्वचः किमपि दर्पनारायण ।
प्रतीपनृप-नागरी-नयननीर-कल्लोलिनी-
समुत्तरण-चातुरीं तुरग-राजिमध्यापय[1] ॥३॥
शङ्कर-मिश्रस्य ॥

---

११० । 1. MS. योषा । 2. SS, 149, v. r. a. जाने…d. प्रातः प्राची… । PT. 94, v. r. a. जाने…d…यदिदमुरु…AK. p. 410, v. r. c…समसुषसि ( दधौ )…देवता सा ।

११२ । SS. 146, PT. 93 ; समाकलय…किमपि रूपनारायण ; d…तुरगराजमध्यापय ।

११३ काञ्ची[1] काञ्ची न धत्ते कलयति न दृशा केरली केलि-तल्पं
सिन्दू[2]रं दूर एव क्षिपति करतल-न्यस्तमान्ध्री पुरन्ध्री ।
सौराष्ट्री मार्ष्टि भूयः सपदि नयनयो रक्तायो रक्तिमानं
कार्णाटी कर्णिकायां मलिनयति मनो मानसिं[3]ह-प्रयाणे ॥४॥
रामचन्द्रागमिनः ॥

११४ भेरीभाङ्कृतिभिस्तुरङ्ग-निनदैः कुम्भीन्द्र-कोलाहलैः
प्रस्थाने तव वीरवर्य दलितं ब्रह्माण्ड-भाण्डोदरम् ।
आध्माय[1]ज्वलति प्रताप-तपने रङ्गैः पुनर्वेधसा (fol. 11b)
तारानायक-तारका-सुरसरिद्व्राजादिवाऽऽयोजितम् ॥५॥
भानुकरस्य ॥

११५ यस्मिन् यात्रोत्सुके वै क्षितिपति-तिलके दूरिताधर्म-शूके
सन्दध्युः सर्वं एतेऽवनिपति-मुकुटा दूरतः ख्यात-खड्गे ।
लाटा भोटा वराटास्तदनु सिलिहटा व्याङ्कटाश्चापि ठाट्टाः
कार्णाटा गौड-चौड-द्रविड-मरहठा दर्पं[1] भारान्मुखेषु ॥६॥
श्रीवेणीदत्तानाम् ॥

११६ यत्-पाणि-भासुरतरायत-पद्मराग-
च्छायाञ्चितं नयनमीक्ष्य सुरी-समूहः ।

---

११३। 1 MS. काञ्ची। 2. MS. द्रू। 3. MS. सिं।

११४। MS. धाय SS. 150, v. r. b. (तव) वीरभान···
c. प्रतापदहने···d...दिवायोजिताम्।

११५। 1 MS. र्गं।

शीघ्रं विमानमधिरुह्य सुमण्डिताङ्गी
नाके विलोकयति गोपुरमम्बुजाक्षः ॥७॥

मल्लु मल्यकामस्य ॥

११७ इन्द्रः प्रक्षुब्ध-चित्तो दिशि दिशि सकलान् दिक्पतीन्
सावधानान्
कुर्वन् वज्रास्त्र[1]पाणिः सुरवर-वलितां देवसेनां निगृह्य ।
स्वर्गद्वारे यदीयोद्धत-बलिनिहत-प्रौढ-ढक्का-[2]निनादं
श्रुत्वाऽतिष्ठत् प्रकम्पत्कुच-कलशतटी[3]-किन्नरी-गीयमानः ॥८॥
श्रीयाज्ञिकानाम् ॥

॥ (१२) अथ गजः ॥

११८ गण्डोड्डीनालिमाला-परिबलित-गलश्चामराकीर्ण-कर्णः
सिन्दूर-स्वच्छकुम्भो मदकल-कलभाकीर्ण सत्प्रान्तभागः ।
कुन्ताक्षेपी[1]पुरोगः करकलित-बलन्मारनागौत्रिकाग्रो
मन्दं मन्दं प्रयाति क्षितिपति-भवनाद्भद्रपीठेभराजः ॥१॥

११९ गर्जन्तो वारिवाहा इव मदमलिनं वारि-पूरं क्षरन्तो
धावन्तो ध्वान्त-भारा इव जन-हृदयान्यम्बु जान्य (fol. 12a)
र्दयन्तः ।
क्षुभ्यन्तः सिन्धुनाथा इव बहुतरसा मन्दराद्राङ्कु शार्ताः
क्षौणिक्षामांगि(?)मारोहलित-सुरगजास्त्वद्गजाः संविभान्ति
॥२॥ श्रीवेणीदत्तानाम् ॥

---

११७। 1 MS. क्ष॰। 2 MS. का। 3. MS. ती।
SS. v. 148, v. r. b. कुर्वन् वज्राक्ष-पाणिः ; c. बल ( निहत )।
११८। 1. MS. ॰ क्षेयी।

१२० उन्मूल्यालानभूमीरुहमतितरसोत्खण्डितान्दू-विताना-
न्याकर्षन्नेष पादैर्मदजल-कलुषः छिन्न-नक्षत्रमालः ।
शुण्डादण्डाभिघातै[1]र्नभसि विदलयन् पुष्करावर्तकादीन्
धावत्याधूत-मूर्धा हरिमभि रभसाद्दृप्तवपुरः करीन्द्रः ॥३॥
कृष्णपण्डितस्य ॥

१२१ अन्दू[1]मुद्धूय बद्धां निजमपि सहसा सूतमुन्मथ्य सद्यो
निर्यात[2]स्त्रस्त-वाजिव्रज-कृत-निनदाकर्णन-क्रुद्धचेताः ।
संरम्भारम्भ-भग्न-द्रुम-विटप-शतैः प्रोथयन्नापणस्था-
नायाति व्याल-नाग[3]स्त्वरितमिह जनाः सावधाना भवन्तु ॥४॥
रामचन्द्रागमिनः ॥

॥ (१३) अथ हयः ॥

१२२ वारितः प्रस्फुरत्येव समुदञ्चित-केसरः ।
अत्यन्तं भ्रमरी-कीर्णो वाजी राजीव-सन्निभः ॥१॥
पद्मावत्याः ॥

१२३ आकर्षन्निव गां वमन्निव खुरौ पश्चार्धमुज्झन्निव
स्वीकुर्वन्निव खं पिबन्निव दिशं वायुं जिगी[1]षन्निव ।

---

१२० । 1 MS. जै ।

१२१ । 1 MS. न्दु । 2. MS. तः । 3 MS. गः ।

१२२ । See Sanskrit Poetesses, Part A, second ed., v. 61, p. 27.

१२३ । 1 MS. वायुं सिजी° ।

साङ्गार-प्रकरां[2] स्पृशन्निव मही छायामस्पृश्यन्निव
चञ्चच्चामर-वीज्यमान-वदनः श्रीमान् हयो धावति ॥२॥

सिंहदत्तस्य ॥

१२४ अलक्षित-गतागतैः कुलवधू-कटाक्षैरिव
क्षणानुनय[1]शीतलैः प्रणय-केलि[2]-कोपैरिव ।
सुवृत्त-मसृणोन्नतैर्मृगदृशामुरोजैरिव
त्वदीय-तुरगैरिदं धरणि-चक्रमाक्रम्यते ॥३॥

(fol. 12b) कस्यापि ॥

१२५ स्ववेग-भिन्नः पवनः प्रयत्ना-
देकीभवेद् यावदयं रयेण ।
तावद्दिगन्तान् समतीत्य वाजी
राजीवनेत्रस्य समाजगाम ॥४॥

श्रीयाज्ञिकानाम् ॥

---

2 MS. का । S´P. v. 583, p, 94, v. r. b···दिशो वायूंश्च मुष्णन्निव । c. ( स्पृशन्निव ) भुवं । d. प्रेङ्खच्चामर··· । SSV. v. 2419, P. 415, v. r. a···गां धमन्निव··· । b···वायून् समश्नन्निव... । SUK. 25. 1, P. 203, v. r. a. द्वरान् । b. छायाममर्षन्निव । c. धरां यातं समश्नन्निव । d. श्रीमन्नाथ स वाजिराट् तव कथं मादृग्गिरां गोचरः ॥ छित्तपस्य ॥ SHV. v. r. 1598.

१२४ । 1 MS. प । 2 MS. ति । PT. v. 82, P 23; SS. v. 123, AK. pp. 143-144, v. r. d· ·तुरगोत्तमैर्धरणि-चक्रमाक्रम्यते ।

१२६ इयती जगती कियती भविता
नमितानन्नतामिति याति हयः ।
वियदङ्गन-रिङ्गण-रङ्गविधौ
परिनर्तितुमुत्क्रमतीव नभः ॥५॥

अकबरी-कालिदासस्य ॥

१२७ आलिङ्गन्तो वसुधां निजखुर-दलितामिवानुने[1]तुममी ।
वदन-विनिर्गत-चरणा इव लक्ष्यन्ते जवादश्वाः ॥६॥

कालिदासस्य ॥

॥ (१४) अथ पदातिः ॥

१२८ वीरांकुरा इवाऽऽभान्ति तरवारिधरा नराः ।
बाहु-द्विपल्लवोल्लासाः सैन्य-वर्षा-पुरःसराः ॥१॥
१२९ धावन्तो मन्द्रसुरवं विद्युत्-कुन्त-लसत्कराः ।
बाणधाराधरा वीरा नीरदा इव भान्त्यमी ॥२॥

ममैतौ ॥

॥ (१५) अथ पताका ॥

१३० श्रीमन्नसालति-महीप-महापताका
रम्यातिरक्त-विमलाम्बर-भासुरश्रीः ।

---

२२६ । SRB. v. 5. pp. 123 & 124, v. r. b. नमिता न न यामिति याति हयः । c···रणाङ्ग भू. । d. विभ्रमन्निव नर्त्तनमातनुते ...। SS. v. 124, v. r. b···यामिति (याति) c···(रिङ्गन) रङ्गन भू । d. विभ्रमन्निव नर्तनमातनुते ।

१२७ । 1 MS. मे । SS. 126.

भूमिर्व[1]लादित-तलादिव निःसरन्ती
मण्यङ्कुता[2] भुजगराज-फणेव भाति ॥१॥
वेणीदत्तस्य ॥

१३१ नृपति-**निजाम** चमू[नां] चरणार्पण-बहुलपीडाभिः ।
रचयति बहिरिव रसनामरुणध्वज-कैतवादवनिः ॥२॥

१३२ **निजाम**-वसुधाधिपे क्षिपति शोण-कोणे दृशौ
रणाङ्गण-समुद्भटैः प्रतिभटैर्विभिन्नीकृतम् ।
वपुर्विपुल-वेपथु व्य[1]थितमञ्जिनीप्रेयसो
व्र[2]णज्वर-विशङ्कया किमु पताकया स्पृश्यते ॥३॥
भानुकरस्यैतौ ॥

॥ (१६) अथ धूलिः ॥

(fol. 13a)

१३३ वाहव्यूह-खुर-क्षतां वसुमतीं संवीक्ष्य मूर्छावतीं
भेरीभांकृति-चञ्चलेन पयसा वारां निधिः सिञ्चति ।
दिग्बाला तनुते **निजाम**-नृपते वातं पताकांशुकै-
र्धूली-धोरणिरश्विनीसुतमिव प्रष्टुं दिवं धावति ॥१॥
भानुकरस्य ॥

---

१३० । 1 MS. व । 2 MS. ङ्ग ।

१३१ । 1 SRB. p. 115, v, 33, v. r. निजामतवाभुत० SS. 143.

१३२ । 1 MS. व्यं । 2. MS. व्रं ।

१३३ । PT. v. 91, p. 25, SRB. v. 38, p. 115, SS. v. 168, v. r. c—पताकां शुभि । अकबरी कालिदासस्य ।

१३४ मा चक्रवाक विरह-ज्वर-कातरो भूः
सङ्कोचमम्बुज न याहि न यामिनीयम् ।
हम्मीर-भूप-हय-टाप-विदीर्ण-भूमी-
रेणूत्करैरयमकारि दिवाऽन्धकारः ॥२॥
कस्यापि ॥

१३५ श्रीमन्नसालति-महीपति-सैन्यवाह-
प्रोद्भूत-धूलि-निवहाद्रिमुदीच्य शक्रः ।
वाराणसी-विरहदूति(?) तम[1]प्यतीव
दीनाक्षि-पातमनुपश्यति कुम्भयोनिम् ॥३॥
ममायम् ॥

॥ (१७) अथ वीर-वाक्यम् ॥

१३६ यो यः शस्त्रं बिभर्ति स्वभुज-गुरु[1]मदः पाण्डवीनां च[2]मूनां
यो यः पाञ्चाल-गोत्रे शिशुरधिकवया गर्भ-शय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य त्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥१॥
वेणीसंवरणस्य ॥

---

१३४। SP. v. 1257, p, 206, v. r. a. मा चक्रचक्रि··· । c. हम्मीर भूप हय टाप··· ।

१३५। 1 M5. दुःखित ? cf. Skanda—purāṇa, Kāś́t-Khaṇda, Pūrvardha, chap 5.

१३६। 1 MS. ह। 2 MS. ब। SK. v. 4, p. 358, v. r. b···गर्भशय्या-गतो वा । d···तस्य स्वयमिह । DL. pp. 98—99.

१३७ दूरे रे द्रौपदेया व्रजत पुनरितो यात पाञ्चाल-बाला:[1]
सर्पाग्रे सात्यके द्राक् त्यज भयमनुजैस्त्वं समं धर्मसूनो ।
कर्णोऽहं खाण्डवान्त:परिकलित-महाधूमकेतु-प्रतापं
पश्यामि प्रौढवीरावलि-वरविदितं चारुगाण्डीवचापम् ॥२॥
वेणीदत्तस्य ॥

॥ (१८) अथ कृपाण: ॥

१३८ हस्ताम्भोजालिमाला नखशशि-हरिण-श्यामलाकार (fol. 13b) वीचि-
स्तेजोऽग्नेर्धूमधारा वितरण-करिणो गण्ड-दानप्रणाली ।
वीरश्री-वेणिदण्डो लवणिमस[2]रसी-बाल-शैवालवल्ली
वेल्लत्यम्भोधर-श्रीरकबरधरणीपाल-पाणौ कृपाणो ॥१॥

१३९ कृपैव निगदन्त्यमी जलदकज्जल-ज्योतिषं
महासि-लतिकां करे तव बघेल-पञ्चानन ।
प्रतापत-पन-स्फुरत्कर-सरोज-कोशोत्थित-
द्विरेफ-लहरीति मे मनसि बुद्धिरुज्जृम्भते ॥२॥
अकबरी-कालिदासस्यैतौ ॥

---

v. r. d. ( तस्य ) स्वयमपि··· । KS. p. 246, l. 8. v. r. a—गुरुमदात् पाण्डवीनां···। b···पञ्चाल-गोत्रे । c···प्रतीपं । d...( तस्य ) स्वयमिह... । SD. p. 311 ; SKB. v. 174. p. 226, v. r. d. तस्य स्वयमिह ।

१३७। 1 MS. ला ।

१३८। 1.MS. प (not र) 2.MS. no स । PT. 89, v. r. a. नखशशि-रुचिर-श्यामलच्छाय । d...पाणौ कृपाण ।

१४० देव त्वं मलयाचलोऽसि भवतः श्रीखण्डशाखी भुज-
स्तस्मिन् कालभुजङ्गमो निवसति प्रौढः कृपाणच्छलात् ।
एष स्वाङ्गमनर्गलं रिपु-तरु-स्कन्धेषु संघट्टय-
न्नूर्ध्वं व्योमविसारि निर्मल-यशोनिर्मोकमुन्मुञ्चति ॥३॥

मद्गुरोः ॥

१४१ भूभृन्मौलि-तटीषु वर्षति महाधाराधरेऽस्मिन्नसौ
याता भूप सरस्वती विजयिनी कल्लोलिनी पाविनी ।
साहासाहिजहां ब्रवीमि तदिदं[1] माहात्म्यमस्याः कथं
यस्यां मज्जति पङ्कजीयति शिवस्तन्धंजोऽलीयति ॥४॥

हरिनारायण-मिश्राणाम् ॥

१४२ भूभृन्मौलि-तटीषु दर्शित-समारम्भोऽयमम्भोधर-
स्त्वत्खड्गः प्रतिपक्ष-पङ्कपटलं प्रक्षालयन् धारया ।
युद्धक्ष्मा-विरुद्ध-सिन्धुर-गलद्गण्डस्थल-प्रस्खल-
न्मुक्ताभिः करकाभिराशु समरक्षोणीतले वर्षति ॥५॥

गणपतेः ॥

---

१४० । SMV. v. 33, p. 340, v. r. b...निवसति स्फर्जत् । d···दीर्घं व्योम··· । SS. v. 142, v. r. d. ऊर्ध्वं ( व्योम )··· निर्मोकमुन्मोचति । *SUK.*, 328.1, p. 206 (attr. to **chittapa**).

१४१ । 1 MS. मं । *SS.* v. 138, v. r. b. जाता··· । c. श्रीमत्साहिजहा··· ।

१४२ । PT. 88, p. 24, v. r. c. दलद् ( गण्ड-स्थल )···SS. 135, v. r. c. शुद्ध···दलद् गण्ड... ।

१४३ केचित् पाणिसरोज-कोष-विलसन्मुक्तालिमालामिति
प्रोचुर्बाहुभुजङ्ग-भीष[1]ण-फणाहा(folt. 14a) लाहलं वाऽपरे ।
अन्ये तु प्रखर-प्रतापहुतभुक्-केतुं महासिं करे
मन्येऽहं तव वैरिवृन्द-वनिता-वैधव्य-धूमध्वजम् ॥६॥

ग्रन्यज्ञात: ॥

॥ (१८) अथ कुन्त: ॥

१४४ यत्सैनिकोच्चण्ड-सुकुन्तराजि:[1]
शम्पाशतं दर्शयतीव नाके ।
द्विषत्कदम्बोत्तम-कुम्भिकुम्भ-
घटा-घनान्त:स्फुरदंशुजाला ॥१॥ ममैव ॥

॥ (२०) अथ भुशुण्डी ॥

१४५ महाचण्डीव संभाति भुशु[1]ण्डी भवत: करे ।
प्रतापज्वर-संभ्रान्त-गोलिका जीवहारिणी ॥१॥

१४६ वह्निचूर्ण-परिपूर्ण-निजान्त-
र्गोलिका-गरल-वक्त्र-विकाशा ।
बाहु-भीषण-भुजङ्गभृतेयं
भाति दुष्टभुज[1]गीव भुशुण्डी ॥२॥ एतौ गौर्या: ॥

---

१४३ । 1 MS. भिषी ।

१४४ । 1 MS. रोचि: ।

१४५ । 1 MS. ज । See Sanskrit Poetesses, Part A, second ed, v. 19, p. 9.

१४६ । 1 MS. ज्ज । op. cit., V 20, p. 9.

॥ (१९) अथ लो[1]हदंष्ट्रा ॥

१४७ यमदंष्ट्रेव संभाति लोहदंष्ट्रा करे तव ।
नीलकोष-लसत्कान्ति-कालखण्डपलान्विता ॥१॥

तस्या एव ॥

॥ (२०) अथ छुरिका ॥

१४८ असिधेनुरियं विभाति ते
जित-सर्वक्षितिपाल-मण्डला ।
प्रलये जगती[1]मिवाशितु'
स्फुरती काल-कराल-जिह्विका ॥१॥ ममैव ॥

॥ (२१) अथ धनुः ॥

१४९ सत् कोटियुक्तं विनतं मार्गणे लक्ष-दायकम् ।
सगुणं कर्ण-विदितं वदान्य इव ते धनुः ॥१॥

१५० वक्रं भ्रूयुगवन्म[1]नोहरतरं लावण्य-पूर्णाक्षिवत्
सद्वृत्ताकलनं कठोर-कुचव[2]ज्जीवास्पदं स्वान्तवत् ।
मुष्टि-ग्राह्य-सुमध्यमं मृग-दृशां शृङ्गार-सन्मध्यव-
द्भाति त्वत्कर-सङ्गतं धनुरहो मध्यन्दिने भानुवत् ॥२॥

गौरीप्रियस्यैतौ ॥

---

१४७। (Heading) 1 MS. कंलो ।

१४८। 1 MS. जगता ।

१५०। 1 MS. युगलम । 2 MS. no व ।

॥ (२२) अथ चर्म ॥

१५१ **नसालति**-महीनाथ-करगं चर्म भात्यलम् ( fol. 14b )।
चन्द्र-तारा-गणाकीर्णमन्तरिक्षमिवाम्बुजे ॥१॥ वेणीदत्तस्य ॥

॥ (२३) अथ रणः ॥

१५२ संग्रामाङ्गनमागतेन भवता चापे समारोपिते
देवाऽऽकर्णय येन येन सहसा यद्यत् समासादितम्।
कोदण्डेन शराः शरैररि-शिरस्तेनापि भू-मण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोक-त्रयम् ॥१॥
कस्यापि ॥

१५३ ध्वनिं सूते न ज्या सपदि कर-शाखा-व्यतिकरात्
क्रमेणापि क्षिप्तो युगपदिव नुन्नः शर-गणः।
धनुः काय-व्यूहं विरचयति किं वा कर-युगं
**जहांगीरे** शत्रु-प्रलयमधियुद्धं वि[1]दधति ॥२॥ चिन्तामणिः ॥

---

१५२। SSV. v. 2513, p. 429, v. r. a. संग्रामाङ्गन-सङ्गतेन। d…कीर्तिरमला। SUK. 38, 2, p. 213, v. r. a. same as in SS. d…कीर्तिरनघा कीर्त्या…। S'P. v. 1225, p. 200; SR. v. 1, p. 146; SHV. v. 1691, PT. v. 101, v. r. a… सङ्गतेन…। b…विधिना ( यद्यत् )…। ASR, p. 179. kpradīpa, p. 217; p. 345, v. r. b. संप्राप्ते परिपन्थि-योध-निवहे सांमुख्य-मासादितम्। RG. p. 439. v. v. d…कीर्तिरमला…। SKB v. 206, p. 530; v. 115, p. 82, v. r. d…कीर्तिरनघा।

१५३। 1 MS. व्य।

१५४ कृपाण-किरणानलं रुधिर-नीर-पू[1]रच्छ[2]टा-
जटाल-तल-सङ्कुलं भट-तिमिङ्गि[3]लैराकुलम् ।
प्रमथ्य समरार्णवं वरमकर्षि लक्ष्मीस्त्वया
विधाय मद-मन्थरं मथ[4]न-मन्द[5]रं सिन्धुरम् ॥३॥ लक्ष्मणस्य ॥

१५५ ते क्षत्रियाः कुण्डलिनो युवानः
परस्परं सायक-विक्षताङ्गाः ।
कुम्भेषु लग्नाः सुषुपुर्गजानां
कुचेषु लग्ना इव कामिनीनाम् ॥४॥ व्यासस्य ॥

१५६ नो चापाकलनं न पत्त्रि-धरणं न ज्या-समाकर्षणं
नो बाहु-स्फुरणं न बाण-गमनं सन्दृश्यते ते रणे ।
किन्तु प्रौढ-करीन्द्र-कुम्भ-विगलन्मुक्ता-गण-प्रस्फुरत्-
प्रत्यर्थि-क्षितिपाल-मौलि-मणिभिर्विद्योतते भूरियम् ॥५॥
गौर्याः ॥

॥ (२४) अथ रण-क्षि[1]तिः ॥

१५७ स्फुरत्तुरग-निष्ठुर-क्षुर-खुराग्र-संविक्षता
क्षणात् समर-विच्युत-प्रतिनृपाल-चेलाञ्चिता ।

---

१५४ । 1 MS. पु । 2. MS. छ । 3. MS. ० मङ्ग । 4. MS. द । 5 MS. न्थ ।

१५६ । SS. v. 157, v. r. b—संलक्ष्यते (ते रणे) । See Sanskrit Poetesses, v. 21, p. 10 ; Part A, second edition.

१५७ । (Heading) 1 MS. च ।

इयं रणधरा (fol. 15a) भवद्विरद-दान-धारा-जलैः
किमु व्रणतलेऽर्पितं वसन-पट्टमासिञ्चति ॥१॥ लक्ष्मणस्य ॥

१५८ प्रक्रीडच्चण्ड-मुण्डावलि चलित-महाभूत-वेताल-वालं
प्रक्षुभ्यत्[1] क्षेत्रपालाकलित-नर-वसा-मांस-मेदोऽस्थि-जालम् ।
उन्माद्यद्रक्त-पानोद्भट-मद-तरुण-प्रौढ-कुष्माण्ड-मालं
डाकिन्यः पूतनाद्या बहुतर-वचनैर्यद्रणं संस्तुवन्ति ॥२॥
वेणीदत्तस्य ॥

॥ (२५) अथारि-पलायनम् ॥

१५९ वर्माणि शाह-परवेज-भिया विपक्षै-
स्तूर्णं पलायनपरैर्वभुरुज्झितानि ।
भूयः श्रमात् पथि कृतस्थितयस्तदीया-
श्छाया इवाऽऽशु सह गन्तुमपारयन्त्यः ॥१॥
चिन्तामणेः ॥

१६० दिग्वासा भस्मभूषः परिकलित-कणा-पूर्ण-भिक्षा-कपालः
प्रस्फूर्जच्चण्ड-शूलः कर-धृत-हरिणः[1] शृङ्ग-वाद्य-प्रवीणः ।
वक्त्र-व्यालम्ब-कूर्चो गिरि-तरु-शयनो नीलकण्ठो विरूपो
मौलौ वल्याज्जटौघो रिपुरनुभवति श्रीमहादेव-लीलाम् ॥२॥
वेणीदत्तस्य ॥

---

१५८ । 1 MS. no त् ।
१६० । MS. णा ।

१६१ तादृग्दण्ड-विवर्त-नर्तित-मही-चक्रादपक्रामिताः
क्वापि क्वापि च कण्टकैरुपगता रेखोपरेखा[1]-भ्रमम् ।
यस्य प्रौढ़तर-प्रताप-तपन-ज्वालाभिरन्ते दिशा-
मापाके निपतन्ति पार्थिव-घटा जीर्यन्ति शीर्यन्ति च ॥३॥
भानुकरस्य ॥

१६२ राजन् द्विषस्ते भय-विद्रुतस्य
भाल-स्थलं कण्टकिनो वनान्ताः ।
अद्यापि किं वा न भविष्यतीति (fol. 15b)
व्यपाटयन् द्रष्टुमिवाक्षराणि ॥४॥ कस्यापि ॥

॥ (२६) अथारि-नारी ॥

१६३ मुखे हारावाप्तिर्नयन-युगले कङ्कण-भरो
नितम्बे पत्रालो सतिलकमभूत् पाणि-युगलम् ।
अरण्ये श्रीकर्ण त्वदरि-युवतीनां विधि-वशा—
दपूर्वोऽयं भूषा-विधिरहह जातः किमधुना ॥१॥

१६४ वीरसिंहारिनारीणामञ्जनाक्ताश्रु-बिन्दवः ।
उरोजे पतिता रेजुः सरोजे मधुपा इव ॥२॥ कयोश्चिदेतौ ॥

---

१६१ । MS. ख ।

१६२ । S'P. v. 1279, p. 210, v. r. b. भालत्वच···। c. किं वानुभविष्यतीति···।

१६३ । S'P. v. 1262, p. 207 ; PT. v. 108, p. 29, v. r. c. ...त्वदरि-वनितानां ।

१६५ यद्वै[1]रि-क्षोणिपाल-प्रियतम-गृहिणी भीति-शुष्यन्मुखाब्जा
कान्तारान्तर्भ्रमन्ती गिरितट-निकटे क्षुत्पिपासार्दितान्तः ।
नीरं हारेऽधरेऽच्छं मधु च बहुतरं भावयन्ती न पश्य (?)-
द्भर्तारं चावदत् त्वं प्रियतम भवता किं मृषा मे न्यगादि ॥३॥

१६६ भ्रान्ता भूरि च कान्तारे कान्ता रेणुभिरुच्चिता[1] ।
द्विषतः स्फटिकान्तःस्थां स्वसारं वीक्ष्य हृष्यति ॥४॥ ममैतौ ॥

१६७ चन्द्रानना चन्द्रक-चारुगात्री[1]
सकोप-वित्रस्त-चकोर-नेत्रा ।
शैलेय-भुग्भिः स्मर-भाववद्भिः
संसेव्यतेऽद्रावरि-भामिनी ते ॥५॥ गौर्याः ॥

॥ (२७) अथारि-नगरी ॥

१६८ अब्लाल क्षौणिपाल त्वदहित-भवने सञ्चरन्ती किराती
कीर्णान्यालोक्य रत्नान्युरुतर-खदिराङ्गार-शङ्कां बिभर्ति ।

---

१६६ । MS. रुषिता ।

१६५ । MS. द्वि । १६७ । MS. ०यत्री ।

१६७ । Sanskrit Poetesses, Part A, second ed,, v. 22, p. 10.

१६८ । SS. v. 174, v, r. a. जल्लाल…( त्वदहित ) नगरे…। b….रत्नान्यतिखर…करोति ; c. मुक्ता श्रीखण्ड-खण्डं…धमली । d. this line is missing in PV. In SS., the line is :—श्वासामोदानुयातैरलिकुल-निकरैर्धूम-शङ्कां बिभर्ति ।

कृत्वा श्रीखण्ड-खण्डांस्तदुपरि मुकुलीभूत-नेत्रा धमन्ती[1]
(fol. 16a)

[ श्वासामोदानुयातैरलिकुलनिकरैर्धूम-शङ्कां बिभर्ति ॥ ] ॥१॥

[ अकबरी-कालिदासस्य ] ॥

१६८ ।।।।।। ऽ ऽ ऽ। ऽ ऽ। ऽ ऽ

।।।।।। ऽ ऽ ऽ। ऽ ऽ। ऽ ऽ

।।।।।। ऽ ऽ ऽ। ऽ ऽ। ऽ ऽ

निधुवनमनुकुर्युः शृङ्ग-कण्डूयनानि ॥२॥

१७० स्नाताः प्रावृषि[1] वारिवाह-पटलैः संरूढ-दूर्वाङ्कुर-

व्याजेनाऽऽत्तकुशाः प्रणाल-सलिलैर्दत्त्वा निवापाञ्जलीन् ।

प्रासादास्तव विद्विषां परिपतत्कुड्यस्थ-पिण्डच्छलात्

कुर्वन्ति प्रतिवासरं निजपति-प्रेतेषु पिण्ड-क्रियाम् ॥३॥

कस्यापि ॥

---

१६९। The last line of the above verse and the first three lines of this are missing.

१७०। MS. क्र। SMV. v. 76, p. 347, (attr. to Hanumat) v. r. a. वारिवाह-सलिलैः···शष्पाङ्कुर...; c...कुड्यस्थ-पिण्ड-स्थलाः...; d··· निज-पति-प्रेताय। S'P. v. 1280, p. 210, vr. a. प्रावृषि मेघवान्त-सलिलैः···; d. निजपति-प्रेताय पिण्ड-क्रियां ; (attr. the Hanumat). SS. v. r. a...वारिवाह-सलिलैः संमूढ...।

॥ (२८) अथारि-दम्पती ॥

१७१ गन्धर्वोऽयं विचित्र-द्युतिरिति विपिने दृश्यते किन्नरीयं
गन्धर्वं-स्वच्छ-वक्त्रा क्षणमिति विष[1]मे शैल-मौलौ विमृश्य।
अन्योन्याश्लेष-भाजोर्गलदमल-जलासार-बाष्पाम्बु ताक्ष्णो
राजंस्त्वद्वैरि-यूनोर्विलसति नितरां वैर-भाव-प्रभावः ॥१॥
वेणीदत्तस्य ॥

१७२ अपर्णेयं भूभृद्वनमटति वल्काम्बरधरा
जटालो दि[1]ग्वासाः शिखरिणि शिवोऽयं निवसति ।
इति भ्रान्त्याऽन्योन्यं क्षण-मिलितयोः क्षौणितिलक
द्विषद्दम्पत्योस्ते शिव शिव भवन्ति प्रणतयः ॥२॥ कस्यापि ॥

१७३ अदीन-कविता-पीन-नवीन-घन-नीरदैः ।
पद्य-वेण्यां[1] सुपूर्णायां तरङ्गोऽभूद्द्वितीयकः ॥३॥

इति श्रीयाज्ञिक-वंशावतंस-नीलकण्ठात्मज-जगज्जीवन-
सूनु-वेणीदत्त-विरचितायां पद्य-वेण्यां
द्वितीय-तरङ्गः स्फूर्तिमगमत् ॥

---

१७१। MS. ग।
१७२। MS. द्वि।
१७३। MS. वेण्यां पद्यां।

## [ तृतीय-तरङ्गः ]

॥ अथ शृङ्गारः ॥

१७४ शृङ्गार-रस-सम्भार-पूर्ण-पद्यालि-रूपिणीः ।
पद्य-वेणी-भवाः सम्यग् धीवराः कलयन्त्वपः ॥१॥

॥ (१) अथ काम-प्रभावः ॥

१७५ प्रतप्तायःपिण्डाविव किमपि सन्ताप्य विशिखै-
र्यथा कल्पान्तेऽपि प्रविघटत एतौ न तु पुनः ।
तथा तौ देहौ यः सपदि शिवयोः संघटितवा-
नमुष्मै कामाय प्रतिनमत वामाय विबुधाः ॥१॥ लक्ष्मणस्य ॥

॥ (२) अथ ललना-वर्णनम् ॥

१७६ वैषम्यं[1] श्रुति-पङ्कजात् प्रकटय[2]त्यानन्द-नीरं दृशोः
स्वर्णालंकरणाद्व्यनक्ति पुलको वैधर्म्यमङ्ग-श्रियः ।
तस्या नूपुर-पद्मराग-महसः पादारविन्द-श्रियो
भेदं [3]शिञ्जितमेव वक्ति किमतः शिल्पं विधेर्वर्ण्यताम्
॥१॥ कस्यापि ॥

१७७ विश्वेश्वरेणेव विनिर्मितेय-
मर्धाङ्गनात्वं प्रतिपद्य यत्नात् ।

---

१७५। SA. v. 35; SSS. v. 765.

१७६। 1. MS. वैषम्य। 2. MS. प्रगटयः। 3. MS. सिञ्जि०। SHV. 1742. SA. v. 62; SSS. v. 775.

१७७। See Sanskrit Poetesses, Part A, 2nd ed., v. 23, p. 10.

अतस्त्रिलोकी-महिलोपमाया-
मद्वैति-भावेन विभाति गौरी ॥२॥ गौर्याः ॥

॥ (३) अथ कन्या ॥

१७८ न दन्तरमुरःस्थलं वचसि नाश्रिता चातुरी
विकारि न विलोकितं भ्रुवि न वक्रिमोपक्रमः ।
तथापि हरिणीदृशो वपुषि काऽपि कान्तिच्छटा
पटावृत-महामणि-द्युतिरिवान्तरा लक्ष्यते ॥१॥

प्रभाकर-भट्टानाम् ॥

१७९ क्रीडन्ती मणि-पञ्जकैः प्रियसखी-वृन्दान्तराल-स्थिता
पञ्चेषोः शर-देवतेव कुतुकात् प्रत्यक्षतामागता ।
अङ्गुल्यग्र-नखांशुभिः प्रविगलल्लावण्य-पूर्णाम्बरा
भाग्याङ्गूपति-कन्यका नयनयोः सौभाग्यमालम्बते ॥२॥

वेणीदत्तस्य ॥

॥ (४) अथ वयःसन्धिः ॥

१८० अचलं चलदिव चक्षुः (17a) प्रकृतमपीदं समुद्यदिव वक्षः ।
अतदिव तदपि शरीरं सम्प्रति सख्याः सखे जयति ॥१॥

घनश्यामस्य ॥

---

१७८ । SA. 178. १७९ । SSS. 779.

१८० । PT. 123, p. 32, (anon.), v. r. d. ( संप्रति ) वामभ्रुवो । SSS. 794, SHV. 1782 (anon).

१८१ न शैशवं वा न च यौवनं वा
न चोभयं नाप्युभयोरभावः ।
निर्णीयते मान-शतैरपीह
मनोभवेनापि तनोर्भवान्याः ॥२॥ नीलकण्ठस्य ॥

१८२ अनिबन्धन-कच-बन्धनमनिदानं दानमुत्तरीयस्य ।
आकस्मिक-मन्द-स्मितमपहस्तयतीव बाल्यमेतस्याः ॥३॥
रघुनाथोपाध्यायानाम् ॥

१८३ अस्या वपुषि[1] तारुण्यं शैशवं वा कृतास्पदम् ।
जातिः कापालिकस्येव न केनाप्यवधार्यते ॥४॥ गुर्जरस्य ॥

१८४ बाल्य-तारुण्य-रागान्तर्निर्विकल्प-प्रभाधरा ।
सन्ध्येव भाति द्विकला सा जगज्जन-वन्दिता ॥५॥

१८५ अस्यां कनक-तुलायां शैशव-गुञ्जाञ्च यौवनं हेम [च] ।
तुलयति कुतुकिनि कामे न नमति मध्यान्मनः-सूची ॥६॥
वेणीदत्तस्य ॥

॥ (५) अथ तारुण्यम् ॥

१८६ उदयति तरुणिम-तरणौ[1] शैशव-शशिनि प्रशान्तिमायाते ।
कुच-चक्रवाक-युगलं तरुणि-तटिन्यां मिथो मिलति ॥१॥
कस्यापि ॥

---

१८२। MS. रघुनथोपध्यायानाम् ।
१८३। MS. अपा वपुशि । १८५। MS. शैशगु॰ । SSS. 797.
१८६। MS. तरुणिमरणौ । SSS. 814; SA. 197; SHV. 180.

१८७ तनुः सुवर्णादपि चारुवर्णा
धम्मिल्ल-भारस्तुलितान्धकारः ।
अपास्त-भृङ्गस्तव दृक्‌तरङ्गः
कल्याणि कस्यासि परा तपस्या ॥२॥

१८८ तूणीशयं स्पृशति नैव शरं करेण
धत्ते मनागपि तरां ? धनुरादरेण ॥
कामः कलावति जगन्ति विजेतुकामः
कल्याणि किं तु तव कामयतेऽङ्ग-तातिम्[1] ॥३॥
मोहनशोभाकस्यैतौ ॥

१८९ सुधा-सारेण लावण्यं विदधेऽस्याः ध्रुवं[1] विधिः ।
अनिमिष-दृशो लोका यदस्यालोकमात्रतः ॥४॥
रमानाथस्य ॥

१९० गतेऽस्या बाल्य-शिशिरे वसन्त-यौवने स्थिते ।
स्मित-प्रसूनैः शृङ्गार-द्रुमः संपुष्पितोऽभवत् ॥५॥
वेणीदत्तस्य ॥

॥ (६) अथावयव-वर्णनम् ॥

॥ तत्र नखः ॥

१९१ अङ्गुष्ठ-नख-दम्भेन पादयोः पतितः किमु !
विभाति वक्त्र-विजितः शशी विगत-कल्मषः ॥१॥
वेणीदत्तस्य ॥

---

१८८ । MS. ताति । १८९ । MS. दध्रु ।

॥ (७) अथाङ्गुलि-नखाः ॥

१८२ विभाति बाला-चरणाङ्गुलीनां
नखावली राग[1]-विमिश्रित-श्रीः ।
शृङ्गार-कल्पद्रुम-कोरकाणां
दलान्तरे पंक्तिरिव प्रसन्ना ॥१॥ गौर्याः ॥

॥ (८) [अथ] पादाङ्गुली-भूषण-मुद्राः ॥

१८३ चरणाङ्गुल्याभरणान्यतिरुच[1]रमन्द-कान्ति-कान्तानि ।
विषमानङ्ग-भुजङ्गम-फण-मणय एण-शावाच्च्याः ॥१॥
विट्ठलेश्वरस्य ॥

॥ (९) [अथ] पादौ ॥

१८४ अमूल्यस्य मम स्वर्ण-तुला-कोटि-द्वयं कियत् ।
इति कोपादिवाऽऽरक्तं पाद-युग्मं मृगीदृशः ॥१॥
विह्लणस्य ॥

१८५ विद्रुमं विद्रुमं यस्मात् कमलं कमलं पुरः ।
इति सञ्चिन्त्य विधिना कुङ्कुमारुणितौ पदौ ॥२॥
गौर्याः ॥

---

१८३। 1 MS. ०रुच्चु० 2 MS. मरणय। SSV. 1570. p. 265, v. r. b...कोपादिवाऽऽताम्रं। S'P. v. 3360, p. 487. v. r. b. as in SSV; SMV. v. 84, p. 189, v. r. same as in SSV; SRB. v. 403, p. 269, v. r. same as in SSV. SA. 149; SHV. v. 1729.

१८५। See Sanskrit Poetesses, Part A. 2nd edition, v. 29, p. 13.

॥ (१०) अथ जङ्घा ॥

१८६ तस्याः पद्मपलाशाक्ष्यास्तन्व्यास्तज्जघन-द्वयम् ।
दृष्टं सखीभिर्याभिस्ताः पुंभावं मनसा ययुः ॥१॥

वाल्मीकिः ॥

१८७ सौन्दर्य-सीमोपरि चारुलेखं (fol. 18a)
जङ्घा-द्वयं स्तम्भ-युगं विभाति ।
विनिर्मितं मन्मथ-विश्व-धात्रा
विभाति रत्नोज्ज्वल-कोटि-रम्यम् ॥२॥

वेणीदत्तस्य ॥

॥ (११) [अथ] जङ्घोरू ॥

१८८ नूनमुरु-द्वयं तस्या रम्भा चपल-चक्षुषः ।
सूते यत्कीर्ति-कर्पूर-पूरं मदन-भूपतेः ॥१॥

भानुकरस्य ॥

१८९ शृङ्गार-सौन्दर्य-मनोज्ञ-सारै-
र्विनिर्मितं चक्रधरेण धात्रा ।
ऊरु-द्वयं[1] सुन्दरमद्वितीयं
स्मरस्य तच्छम्बर-शासनाय ॥२॥ वेणीदत्तस्य ॥

---

१८६ । SSV. v. 1559, p. 263, v. r. b. स्वपन्त्या जघनं घनं । S'P. 3355, p. 486 ; SMV. v. 77, p. 188, v. r. b. त्तान्त्यास्तज्ज-घनं घनं । SRB. v. 382, p. 268, v. r. same as in SSV. PT. v. 39, v. r. b...ज्जघनं घनं । SA. v. 142.

॥ (१२) अथ वराङ्गम् ॥

२०० वराङ्गं भाति तन्वङ्ग्यास्तिल-रोमालि-सङ्कुलम् ।
दग्धस्य पञ्चबाणस्य तर्पणोदक-पात्रकम् ॥१॥

वेणीदत्तस्य ॥

॥ (१३) अथ नीवी-ग्रन्थिः ॥

२०१ विविध-मणि-जटिल[1]-कनक-प्रसून-लसदसित-पट्ट[2]-
गुच्छाभ्याम् ।
लसताऽतिपीत-दाम्ना शुशुभे ग्रन्थिः प्रिया-नीव्याः ॥१॥

विट्ठलेश्वरस्य ॥

॥ (१४) अथ रोमावली ॥

२०२ त्रिवलि-सरितां मध्ये[1] मध्ये विधित्सति नूतनो
मनसिज-महीपालः सेतुं तदस्य निदेशतः ।
अभिनव-वयःशिल्पी रोमावली-विधि-कैतवात्
किमिह सरलं सूत्रं धत्ते मसी-मलिनीकृतम्[2] ॥१॥

मोहनस्य ॥

२०३ पयोधरस्तावदयं समुन्नतो
रसस्य वृष्टिः सविधे भविष्यति ।
अतः समुद्गच्छति नाभि-रन्ध्रतो
विसारि-रोमालि-पिपीलिकावलिः ॥२॥ गणपतेः ॥

---

२९९ । 1 MS. उरुद्वयं ।

२०१ । 1 MS. जथित । 2 MS. पट्ट० ।

२०२ । 1 no मध्ये । 2 SR. v. 3, p. 344 ; SA. 138.

२०४ रामा-रोमावली-व्याजान्मन्ये मदन-दन्तिनः ।
स्यन्दते मदलेखेयं कुच-कुम्भ-तटादधः ॥३॥
वाहिनीपतेः ॥

२०५ तन्वग्र्या(fol. 18b)स्तनौ नाभि-सरोवरेऽस्मिन्
पपात मारो हर-नेत्र-दग्धः ।
रोमावली भाति तदत्र मूर्ती-
हृत्तेव शृङ्गार-रसस्य धारा ॥४॥

२०६ नाभी-सरः स्नातुमिहाऽऽगतस्य
मनोज-नागस्य पद-च्युतेव ।
रोमालिका मञ्जुल-शृङ्खलेयं
विभाति तारुण्य-मदोद्धतस्य ॥५॥ वेणीदत्तस्य ॥

॥ (१५) अथ मध्यः ॥

२०७ बद्धा वयो मां त्रिवली-गुणेन
गृह्णाति रोमावलि-वेत्र-वल्लीम् ।
इतीव चिन्ता-भर-भङ्गुरोऽयं
मध्यो मृगाक्ष्याः कृशतामुपैति ॥१॥ गणपतेः ॥

२०८ विसस्मार प्रायः स्तन-जघन-सौन्दर्य-लहरी-
समुद्भ्रान्तः स्रष्टुं[1] विधिरपि च मध्यं मृगदृशः ।
पुनर्नैवास्राक्षीदथ पृथगिव स्यादिति भिया
निरालम्ब-स्थैर्यं यदिह तदनङ्गस्य महिमा ॥२॥
मैथिलस्य ॥

---

२०८ । 1 MS. स्रष्टुं ।

२०९ अनन्त-तत्त्वं परिगृह्य धाता
विनिर्मितोऽस्याः किल मध्य-भागः ।
अणुः परं योगि-दृशाऽनुलक्ष्यः
सञ्चित्कला-स्थैर्य-बलावनद्धः ॥३॥ वेणीदत्तस्य ॥

॥ (१६) अथ कुचौ ॥

२१० कनक-क्रमुकायितं[1] पुरस्तादथ पङ्केरुह-कोरकायमाणम् ।
क्रमशः कलशायमानमास्ते सुदृशो वक्षसि कस्य भागधेयम् ॥
॥१॥ प्रभाकर-भट्टानाम् ॥

२११ कुचावस्याः[1] कामद्विप-कलभ-कुम्भाविति परे
वदन्त्यन्ये वक्षः-सरसि कमले[2] काञ्चन-घटौ ।
अमी मे सिद्धान्तः स्फुरति मदनेन त्रिजगतीं
विनिर्जित्य न्युब्जीकृतमिव निजं दुन्दुभि-युगम्
॥२॥ सदा (fol. 19a) शिवस्य ॥

२१२ अमृतोन्मथितैः सुवर्ण-चूर्णै-
र्मृदमुत्पाद्य निधाय नाभि-चक्रे ।

---

२१० । 1 MS. कोरकायितम् । SHV. 1672.

२११ । 1 MS. ०वस्था । 2 MS. कमलौ । PT. v. 149, pp. 37—38, v. r. b…धीराः (सरसि) । c. अयं मे । SRB. v. 291, p. 265, v. r. c. ममायं । SR. v. 13, p. 343, v. r. c. ममायं । SHV. v. 1661.

अकरोन्नव-रोमराजि-यष्ट्या
कुच-कुम्भौ कुसुमेषु-कुम्भकारः ॥३॥

कस्यापि गुर्जरस्य ॥

२१३ सद्वृत्तौ सचिवौ कुचाविति पुरस्कृत्य स्मरः सुभ्रु वो
लावण्य-द्रविणं न्यधत्त निभृतं नाभी-गभीरोदरे ।
एतावुन्नति[1]-सम्भ्रमाल्लघु रसं[2] स्वीकृत्य सर्वं नु तत्
काठिन्यं भजतः क्रमादनुचरीभूतौ यथा स प्रभुः ॥४॥

कविकङ्कणस्य ॥

२१४ रोमावली-शृङ्खलया निबद्धौ
कामेन मन्ये कुच-चक्रवाकौ ।
अतो मुखेन्दोरुदयेऽपि तस्या
नो जायते जातु तयोर्वियोगः ॥५॥

मोहन-ओझाकस्य ॥

२१५ जगन्ति जेतुं चलितस्य सम्यग्-
महीपतेः पुष्पशरासनस्य ।
माङ्गल्य-हेतोर्वयसा प्रयुक्तं
वक्षोरुह-श्रीफल-युग्ममेतत् ॥६॥

॥ (१७) अथ बाहू ॥

२१६ किं शृङ्गार-समुद्र-कल्पलतिके किं वा मृणाली-लते
किं वक्षोज-महीध्र-चन्दन-लते किं मार-पाशो-लते ।

२१३ । 1 MS. ०वुन्नत्ति० । 2 MS. ०रस ।

किं लावण्य-सुधाब्धि-विद्रुम-लते पल्लाङ्गुली-संयुते
भातः किं कल-गूर्जरी-सुललिते बाहु लते मन्मते ॥१॥

पद्मावत्याः ॥

२१७ आश्चर्यं पाणि-पाशस्य गिरीन्द्रतनये तव ।
जगद्बन्धनदक्षा शम्भुर्यन्न बन्ध्यं समिच्छति ॥२॥ ममैव ॥

॥ (१८) अथ कण्ठः ॥

२१८ न भाति कण्ठः किमु कामभूपते-
विभाति जैत्रः[1] किल कम्बु रेव ।
अद्यापि संभाति यतस्तदीया
रेखा-मिषादङ्गुलि-यन्त्रणीयम् ॥१॥ पद्मावत्याः

२१९ मातङ्ग-कुल-सम्भूति-जात-पातक-शङ्कया ।
स्नातीव मुक्ता-हारोऽस्याः स्फुरत्कान्ति-जले गले ॥२॥

वैद्यभानोः ॥

---

२१६ । See Sanskrit Poetessess, Part A, 2nd ed., v. 59, p. 26.

२१८ । MS. जैत्र । See Sanskrit Poetesses, Part A, 2nd ed., v. 58, p. 26.

२१९ । S′P. v. 3328, p. 481, v. r. a. मातङ्ग कुम्भ संसर्ग-जात···। SMV. v. 38, p. 183, v. r. a. कुम्भ-संस्पर्श-जात । SR. v. 1, p. 341, v. r. same as in S′P.; SRB. v. 302, p. 266, v. r. same as in S′P.

२२० इयमानन्द-लतिका न ग्रीवा हरिणीदृशः ।
यतोऽस्यां विलुठन्तीति मुक्ताः शुद्ध-गुणान्तराः ॥३॥
वेणीदत्तस्य ॥

२२१ मणिवर-हीरक-हाटक-घटितं मुक्तावली-प्रायम् ।
प्रकट[1] इव भाग्य-निचयो भूषणमस्या बभौ कण्ठे ॥४॥
विठ्ठलेश्वरस्य ॥

॥ (१८) अथाधरः ॥

२२२ तवैष विद्रुमच्छायो मरु-मार्ग इवाधरः ।
करोति कस्य नो बाले तृष्णयाकुलितं मनः ॥१॥
कस्यापि ॥

२२३ किं बिम्बं किमु विद्रुमं किमु लसद्बन्धूक-पुष्पं नु किं
सन्ध्यारक्तमणिः कथं नु जगदानन्द-द्रुमस्याङ्कुरः ।
किं वा काम-महीपतेस्त्रिजगतां सम्मोहनं कार्मणं
किं वा स्त्री-लिपि-भाग्य-गूर्जरवधू-भव्याधरो भासते ॥२॥
ममायम् ॥

---

२२१ । MS. 1 प्रगट ।

२२३ । S'P. v. 3310, p. 478, v. r. c...( कस्य नो ) मुग्धे । d. पिपासा...। SSV. v. 1507, p. 254, v. r. same as in S'P. SR. v. 1, p. 339, v. r. d. पिपासा । SRB. v. 137, p. 261, v. r. same as in S'P. SHV. v. 1619.

२२४ सुधा-विद्रुम-सत्सारैर्धात्राऽस्या रचितोऽधरः ।
यतोऽनङ्ग-भुजङ्गेन दष्टं जीवयते क्षणात् ॥३॥ गौर्याः ॥

॥ (२०) अथ दन्ताः ॥

२२५ सिन्दूरारुण-मौक्तिकावलिरियं माणिक्य-लब्धान्तरा
पाकोत्तीर्ण-विदीर्ण-दाडिम-गतं तद्बीज-पंक्ति-द्वयम् ।
कौन्ती स्रक्[1] स्मर-मालिकेन महतायासेन संगुम्फिता
दन्तश्रेणिरियं भवेन्मृगदृशां यूनां मनोमादिनी ॥१॥
शङ्कर-मिश्रस्य ॥

२२६ पद्मान्तरे मौक्तिक-पंक्ति-युग्मं
किं हीरक-श्रेणि-युगं पयोजे ।
दन्तीकृता मन्मथ-विघ्न-धात्रा
मन्ये मृगाङ्कस्य कला बलेन ॥२॥ वेणीदत्तस्य ॥

॥ (२१) अथ नासा ॥

२२७ दन्तालि-दाडिमी-बीज-भक्षणोत्कण्ठितात्मनः ।
मन्ये मार-शुकस्येयं नासा-चञ्चुर्विराजते[1] ॥१॥ पद्मावत्याः ॥

---

२२४ । See Sanskrit Poetesses, Part A, 2nd edition, v. 28, p. 12.

२२६ । 1 MS. श्टक् ।

२२७ । MS. 1 विजायते । 1 PT. v. 140, p. 36, v. r. b. भक्षणोत्कण्ठ-चेतसः । See Sanskrit Poetesses, Part A, 2nd edition, v. 56, p. 25.

२२८ नासा जगत्त्रयीद्दाम-कामभूप-जयध्वजः ।
तत्रास्ति वेसर-मिषात्तल्लक्ष्म-मकरो यतः ॥२॥ ग्रन्थकृतः ॥

॥ (२२) अथ नासा-मौक्तिकम् ॥

२२९ जित्वा मुखेनाऽऽयत-लोचनायाः
स्मर-प्रियं चन्द्रमसं बलेन ।
तारावरोधः किमु लम्बितोऽयं
नासाग्र-मुक्ताफलकच्छलेन ॥१॥ ममायम् ॥

२३० सुधामयोऽपि क्षय-रोग-शान्त्यै
नासाग्र-मुक्ताफलकच्छलेन ।
अनङ्ग-सञ्जीवन-दृष्ट-शक्ति
मुखामृतं ते पिबतीव चन्द्रः ॥२॥ वैद्यभानोः ॥

॥ (२३) अथ चिबुकम् ॥

२३१ रहसि कामि-कराकलनीयतां
दधदिदं चिबुकं तव सुन्दरि ।
जयति मञ्जु कृतं विधिना स्वयं
वदन-दर्पण-वृन्तमिवानघम् ॥१॥ बिन्दु-कविः ॥

---

२२८ । MS. वेसरि०

२३० । S'P. v. 3305, p. 477 ; वैद्यनाथस्य । SMV. v. 7, p. 268, attr. to Vaidyanātha ; SR. v. 2, p. 338 ; SRB. v. 120, p. 260 ; SHV. v, 160.

२३२ आचुम्बितं कामिवरेण हर्षात्
सकाम-वामा-चिबुकं मनोज्ञम् ।
शृङ्गार-सत्सम्पुट-पद्म-मध्ये
भृङ्गाभिधः(?) कोरकवद्विभाति ॥२॥ ममैव ॥

२३३ किं वर्णयामि तस्याश्चिबुक-गत-श्याम-बिन्दु-सौन्दर्यम् ।
मन्ये रसिक-शिरोमणि-माधव-मन एव संलग्नम् ॥३॥

२३४ आधिक्यादधर-सुधा स्खलेदिति प्राप्त-शङ्कया विधिना ।
रचितं तदुपष्टम्भे चिबुकं[1] पाटीरमादधता[2] ॥४॥
विठ्ठलेश्वरस्य ॥

॥ (२४) अथ नेत्रे ॥

२३५ उड्डीया[1]गतमिन्दु-मण्डलमिदं किं (fol. 20.b)
खञ्जरीट-द्वयं
हित्वा कोरकतां विकस्वरतरे याते किमिन्दीवरे[2] ।
इन्दोर्बिम्बमवाप्य जात-रभसौ किं वा चकोराविमा-
वां[3]ज्ञातं शफरी-विलास-पटुनी नेत्रे कुरङ्गीदृशः ॥१॥
शङ्कर-मिश्रस्य ॥

२३६ वक्त्र-मण्डलमुरो भविताऽस्या मध्यभूर्वलिभिराक्रमणीया ।
ख्यातुमेतदिव कर्णमुपेतुं मीयते नयनयोर्व्यवसायः ॥२॥
कविकङ्कणस्य ॥

---

२३४ । 1 MS. चिवके । 2 आधदति ।
२३५ । 1 MS. ड्डीया० । 2 MS. ०न्दीवीरे । 3 MS. आ० ।

२३७ राधिका-चटुल-दृष्टि-कर्तरी-लून-पक्ष्म-हरि-दृक्‌चकोरयोः ।
दूरमुड्डयनमस्तु कुत्र वा स्वैर-सञ्चरणमप्यलुप्यत ॥३॥
चिन्तामणिः ॥

२३८ यन्नेत्र-कान्ति-लव-लेश-विलास-लीला-
लाभाय मुग्ध-मनसो हरिणास्तृणानि ।
अद्यापि निर्जन-वने कृत-सन्निवासाः
संभक्षयन्ति न च तां सुषमां व्रजन्ति ॥४॥
वेणीदत्तस्य ॥

२३९ मुखे शृङ्गार-सरसि लावण्यामृत-पूरिते ।
काम-क्रीडा-हितं भाति नयनं शफरी-युगम् ॥५॥ गौर्याः ॥

॥ (२५) अथ कटाक्षः ॥

२४० अपाङ्गस्तव तन्वङ्गि विचित्रोऽयं भुजङ्गमः ।
दृष्टमात्रः सुमनसामपि मूर्छा-विधायकः ॥१॥ गौर्याः ॥

२४१ पिपासुरिव सञ्चलन्निकट-कर्ण-कूपाञ्चलं
ततः प्रतिबलन् पुनः श्रवण-पाश-भीतः किमु ।

---

२३९ । See Sanskrit Poetesses, Part A, 2nd edition, v. 26, p. 12.

२४० । See Sanskrit Poetesses, Part A, 2nd edition, v. 27, p. 12.

तनोति तरलाकृतिस्तरललोचने सन्ततं
गतागत-[1]कुतूहलं मुहुरपाङ्ग-रङ्कुस्तव ॥२॥
लक्ष्मणस्य ॥

२४२ केचिन्मार-शरं च केऽपि भुजगं केऽप्यागदन्[1] कुन्तकं
केचिद् यौवन-रङ्गमुन्नत-धिय (fol. 21 a) श्चान्ये
महोल्का-व्रजम् ।
मन्येऽहं त्रिगुणाश्रितं पर-महानन्दैक-दूतं वर-
प्रच्छन्नोपनिषच्छ्रुतं तव शिवापाङ्गं मदन्तर्गतम् ॥२॥
वेणीदत्तस्य ॥

॥ (२६) अथ भ्रुवौ ॥

२४३ भ्रूलेखा-युगलं भाति तस्याश्चपल-चक्षुषः ।
पल्लवयीव हरिता नासा-वंश-विनिर्गता ॥१॥ विल्हणस्य ॥

२४४ धम्मिल्ल-राहुं प्रसमीक्ष्य मन्मथो
मुखामृतं पातुमिहाऽऽगतं हठात् ।

---

२४१ । 1 MS. गतागतकृ॰ । SRB. v. 111, p. 260, v. r. a. पिपासुरिव चञ्चलं विकटकर्ण-कूपाञ्जलं । b...प्रतिवसन्मुहुः... भीतोऽभितः । SA. v. 85.

२४२ । 1 MS. आदरा ।

२४३ । S'P. v. 3297, p. 475, v. r. a. भ्रूरेखा । SMV. v. 7, p. 178, v. r. b. नासावंशी-विनिर्गता । SUK. 69. 5, p. 115, v. r. c. तस्याश्चटुल । d. नासावंशस्य निर्गता । SRB. v. 52, p. 258, v. r. same as in S'P. SA. v. 77 ; SHV. v. 1586.

तद्रक्षणायाऽऽहितवान्विधिस्त्र-
स्तदन्तरे दृग्भुजगीयुगं भ्रुवौ ॥२॥ वेणीदत्तस्य ॥

२४५ वेधाश्चकोर[1] खञ्जन-मीन-मृगाणाञ्च गञ्जनात्तुष्टः ।
अर्पितवान् भ्रू-मिषतो मारकतं छत्र-युग्मकं सुदृशोः ॥३॥
गौर्याः ॥

॥ (२७) अथ तिलकम् ॥

२४६ कस्तुरी-तिलकं तस्या जनयति शोभां भ्रुवोरन्तः ।
कोदण्ड-मध्य-लग्नं फलमिव पञ्चेषु-बाणस्य ॥१॥ पद्मावत्याः ॥

२४७ शृङ्गार-सौधे वदने विचित्रं
त्रैलोक्य-जेतुः स्मर-भूधवस्य ।
राज्याभिषेकोत्तम-भद्र-पीठं
सनायकं तत्तिलकं विभाति ॥२॥ वेणीदत्तस्य ॥

॥ (२८) अथ कपोलौ ॥

२४८ आलि पालि-ललितौ तव भातः
कर्णिकार-सख-कर्णिकपोलौ ।
पद्मजेन रति-पञ्चबाणयो-
र्दर्पणाविव[1] सुवर्ण-निर्मितौ ॥१॥ बिन्दु-कवेः ॥

---

२४५। MS. वेधा चकोर०। See Sanskrit Poetesses, Part A, 2nd edition, v. 25. p. 11.

२४६। See Sanskrit Poetesses, Part A, 2nd edition, v. 57, p. 25.

२४८। 1 MS. दर्पणा।

२४९ निष्कलङ्कौ कलानाथौ लावण्यामृत-पूरितौ[1] ।
कपोलौ वक्त्र-शशिनः पार्श्वरक्षाविवोत्तमौ ॥२॥ वेणीदत्तस्य ॥

॥ (२९) अथ गल्लौ ॥

२५० आपूप-युग्मं मदनस्य धात्रा
विनिर्मितं वल्गुप्रपहार-हेतोः ।
गल्ल-द्वयं (fol. 21b) कान्त-रसातिरम्यं
तस्या महास्नेह-भृतं विभाति ॥१॥

२५१ अतिमृदु नवनीताच्चन्द्रकाच्चातिरम्यं
बहुललित-सुधायाः स्वादतः सद्रसाढ्यम् ।
सकल-ललित-भोगागार-भाग्यैकयोग्यं
परिलसति हविष्यं कस्य गल्लच्छलेन ॥२॥
एतौ ग्रन्थकृतः ॥

॥ (३०) अथ श्रुती ॥

२५२ मादृग्दृगेण-द्वय-बन्धनाय
पाश-द्वयं कर्ण-मिषादमुष्याः[1] ।
दृग्दम्भ-विश्रम्भ[2]मृगोपसेव्यं
सज्जीकृतं मन्मथ-यौवनाभ्याम् ॥१॥ अमरचन्द्रस्य ॥

---

२४९ । 1 MS. कूरितौ ।
२५२ । 1. MS. अमुख्याः 2. MS. विश्विंन ।

२५३ महेश्वरस्यापि मनःकरीन्द्रं
नियन्त्रितुं कामयतः स्मरस्य ।
आलानपाश-स्रगिवावभाति
तस्याः श्रुतिश्री रचिता गुणाढ्या ॥२॥ ममायम् ॥

॥ (३१) अथ भालम् ॥

२५४ न भवति बाला-भालं किन्तु विशालं रतीश-जय-पत्रम् ।
विलसति यस्माद्रुचिरा तिलक-मिषेणास्य कर-मुद्रा ॥१।
वेणीदत्तस्य ॥

२५५ सर्गादौ जलधेरजायत पुरा मन्थे शशाङ्क-द्वयं
तत्रैकं परिगृह्य पङ्कजभुवा भित्त्वाऽन्तराले विधुम् ।
तत्राऽऽद्येन लवेन शङ्कर उपात्तस्थे तदन्त्येन तु
त्वामाङ्क्या विदधे ललाटमपरं श्यामं नभस्यत्यजत् ॥२॥
बिन्दोः ॥

॥ (३२) अथ कर्ण-ताटङ्कम् ॥

२५६ शशी हर्तुं लोभान्मुख-कमल-शोभां सु ततलं
सिषेवे सातङ्कस्तव तरुणि ताटङ्क-कपटात् ।
तदन्तःपीयुषं निखिलमथ निक्षिप्य मधरे
मनोजन्मा मुष्णन्[1] मुहुरहह तुच्छं तमकरोत् ॥१॥
रामचन्द्रस्य ॥

---

२५६। 1 MS. मुञ्चन् ।

२५७ निकर्तितु[1] मान-महो (fol. 22a) धरेन्द्रं
त्रैलोक्य-वामा-हृदयान्तरालात्।
मारस्य ताटङ्क-मिषेण मन्ये
चक्रद्वयं चारुतरं विभाति ॥२॥ वेणीदत्तस्य ॥

॥ (२२) अथ केशपाशः ॥

२५८ उल्लङ्घ्य जङ्घामवलम्बमाना
वेणी स्फुरत्यायत-लोचनायाः।
जित्वा जगच्चन्दन-शाखिकायां
न्यस्ताऽसि-वल्लीव मनोभवेन ॥१॥ माधवस्य ॥

२५९ लालाटेक्षण-दीप-कज्जल-चयः कोटीर-चन्द्र-प्रभा-
वन्दि-ग्राह-गृहीत-राहुरभितो वक्त्राम्बुजाम्बुलिच्छटा।
लावण्यार्णव-काल-कूट-शकलः सिन्दूर-सन्ध्या-तमो
धम्मिल्लस्तव धूर्जटि-प्रियतमे श्रेयांसि पुष्णातु नः ॥२॥
अकबर-कालिदासस्य ॥

२६० आभुग्नाङ्गुलि-पल्लवौ कच-भरे व्यापारयन्ती करौ
बन्धोत्कर्ष-निबद्ध-मानसतया शून्यां दधाना[1] दृशम्।
बाहूत्क्षेप[2]-समुन्नते स्तनतटे विन्यस्त-चोलांशुका
स्त्री-सङ्कोचित-बाहु-मूल-सुभगं बध्नाति जूटिं वधूः ॥३॥
कस्यापि ॥

---

२५७। 1 MS. निक्र्तितु

२६०। 1. MS. दधाना 2. MS. वाहुत्क्षेप। SP. v. 3291, p. 474, v. r. c. (समुन्नते) कुचतटे पर्यस्त-चीनांशुका। SR.

२६१ किं चारु-चन्दन-लताकलिता भुजङ्गाः
किं पत्र(?)-पद्म-मध-संवलिता नु भृङ्गाः ।
किं वाननेन्दु-जित-राहु[1]रुचोऽर्चिं राल्यः[2]
किं भान्ति[3]गूर्जर-वर-प्रमदा-कचाल्यः ॥४॥ पद्मावत्याः ॥

२६२ वदन्तु रामा-चिकुरं कियन्तो
राहुं तमस्तोममलि-व्रजं वा ।
धम्मिल्ल-वेषात् समकल्पयत्तं
शृङ्गारमेवेति विधिर्मतं मे ॥५॥ वेणीदत्तस्य ॥

॥ (३४) अथ सीमन्त-सिन्दूरम् ॥

२६३ सिन्दूर-धूलिमरुणां लपनस्य साक्षा-
च्चित्तस्य वृत्तिमिव रागवतीं दधानः (fol. 21b) ।
सीमन्त एष तव[1] तन्वि गतागतानि
व्यातन्वतो रतिपतेरिव भाति पन्थाः[2] ॥१॥ बिन्दोः ॥

---

v. 3, p. 335, v. r. c…कुचतटे पर्यन्त। SRB. v. 35. p. 258. v. c. कुचतटे पर्यन्त । d. ( वाहु-मूल ) सुभगे…SA. v. 157.

२६१ । MS. राकंडु । 2. MS. विवाल्यः । 3. MS. भाति । See Sanskrit Poetesses, Part A, 2nd edition, v. 54, p. 24.

२६३ । 1. MS. भुव । 2. MS. पन्था ।

२६४ लावण्यरागेण पसा (?) प्रयत्नात्
सद्रञ्जितं मान्मथमद्वितीयम्।
शृङ्गार-भूमौ परिलम्बितं तत्
सीमन्त-सिन्दूरकबन्धनं नु ॥२॥ वेणीदत्तस्य ॥

२६५ न सा सिन्दूर-रेखालिमुक्तावलि-विराजिता।
सफेनराशिराभाति पूरः सौभाग्य-वारिधेः ॥३॥
विट्ठलेश्वरस्य ॥

॥ (३५) अथ वक्त्रम्[1] ॥

२६६ अनुच्छिष्टो देवैरपरिदलितो[2] राहु-दशनैः
कलङ्केनास्पृष्टो न खलु परिभूतो दिनकृता।
कुहूभि[3]र्नो लुप्तो[4] न च युवति-वक्त्रेण विजितः
कलानाथः कोऽयं कनक-लतिकायामुदयति[5]॥१॥
शङ्कर-मिश्रस्य ॥

२६७ कमलानि पानमधु-भाजनानि नः
पिदधाति यः स विधुरेष गोचरः।

२६६। MS. अथ चक्रम्। 1. MS. 2. ०दलितौ। 3. MS. कुहु०। 4. MS. लिप्तो। 5. MS. उदये।

PT. v. 135, p. 35 ; SRB. v. 200, p. 263 ; SSS. v. 613 ; SHV. v. 1633.

२६७। See Sanskrit Poetesses; Part A, 2nd edition, v. 56, p. 25.

इति रोषणैरिव मधुव्रतैर्धृतं
　　दधती मुखं सुरभि-चारु-मारुतम् ॥२॥
　　　　　　　　　　अमरचन्द्रस्य ॥

२६८　तव रुचिर-मुखेन्दोः कान्ति-पीयूष-धारां
　　चतुरतर-चकोरी-चक्रमास्वाद्य सद्यः ।
अनुगत-बहुमाध्वी-चञ्चु-जाड्यापनुत्यै
　　कलयति शशि-बिम्बे काञ्जिक-भ्रान्तिमेतत् ॥३॥
　　　　　　　　　　पद्मावत्याः ॥

२६९　सञ्जीविनी-कन्दमिदं मुखं ते
　　नासाङ्कुर-भ्रू युग-पत्र-चित्रम् ।
विभाति यस्याधर-पत्र-पानात्
　　सञ्जीवति मार-यमाहतोऽपि ॥४॥ मदीयोऽयम् ॥

॥ (२६) अथ सर्वाङ्ग-वर्णनम् ॥

२७०　आगुल्फमालम्बित-वल्गु-वेणी
　　विभाति बाला-कनकाङ्ग-यष्टिः ।
उत्तीर्ण-मौर्वीव वशीकृतोर्वी
　　मनोभुवश्चम्पक-चाप-वल्ली ॥१॥　　माधवस्य ॥

२७१ किं पद्मे किमु पल्लवे किमु पटी किं स्वर्ण-वल्लयङ्कुरौ
किं जङ्घे किमु पञ्चबाण-परिघौ किं मार-नागौ-करौ ।
किं बाहू किमु हेम-पूग-युगलं किं तारजम्बीरके
किं वक्षोजयुगं कथं नु लतिका हैमी नु किं कामिनी ॥२॥

२७२ प्रङ्क ऽवलान्तर-गता किमियं नु विद्युत्
किं (fol. 31a) कौमुदी किमुत कामकलाधिदेवी ।
किं वा सुवर्ण-लतिका किमु मोहवल्ली
किं कामिनी कमल-कोमल-कोश-गौरी ॥२॥

वेणीदत्तसैरती ॥

२७३ नाना-कवि-रसासार[1]-कविता-भार-भासुरः ।
पद्यवेण्यां समभवत्तरङ्गोऽयं तृतीयकः[2] ॥

इति श्रीयाज्ञिक-वंशावतंस-नीलकण्ठात्मज-जगज्जीवन-
सूनु-वेणीदत्त-विरचितायां पद्य-वेण्यां
तृतीयस्तरङ्गः प्रस्फूर्तिमगात्[3] ॥

---

२७३। 1. MS. कविरसारक० । 2. MS. तृतीयः कः ।
3. MS. Colophon अगत् ।

# चतुर्थ-तरङ्गः

॥ (१) अथ आसक्तस्योक्तिः ॥

२७४ गुरुतर-लज्जा-वशतो विघटन-भयतो विवेकतो वापि ।
यदि नैव सुतनु रङ्गो नयन-तरङ्गो निवारितः केन ॥१॥

२७५ दूरमस्तु मद-घूर्णित-तारं[1]
शारदेन्दुमुखि वीक्षणमक्ष्णोः ।
एतदेव मम पुण्यमगण्यं
यत् कृशोदरि दृशोरतिथिस्त्वम्[2] ॥२॥

२७६ उचितं गोपन[1]मनयोः कुचयोः कनकाद्रि-कान्ति-तस्करयोः ।
अवधीरित-विधुमण्डल-मुखमण्डल-गोपनं किमिति ॥३॥
केषाञ्चिदिति ॥

२७७ त्वं सर्वस्वं कमल-नयने जीवितं त्वं मदीयं
दीर्घापाङ्गि त्वमसि हृदयं मामकीनं द्वितीयम् ।
त्वं मुग्धाक्षि प्रणय-सरसोऽभ्यन्तरः स्नेहपाश-
स्त्वं प्राणानां परतरमसि त्वं ममाङ्गे सुधाऽसि ॥४॥

---

२७५ । 1. MS तोरं । 2. MS. अतिथित्वं । SRB. v. 34, p. 278, v. r. a. दूरमस्तु दर ..। b. शारदेन्दुमुख ।

२७६ । 1. MS गोपानं । SR. v. 2, p. 348 ; SRB. v. 27, p. 312 ; SSS. v. 430.

२७८ निन्दन्तु सुन्दरि जना गुरवो हसन्तु
भिन्दन्तु मर्म विशिखा मम मन्मथस्य ।।
विन्दन्तु नाम महिमानममूः स्त्रियो मा
मन्मानसन्तु भवतीं न जहाति कश्चित् ।।५।।
सदाशिव (fol. 23b) स्थैतौ ।।

२७९ चक्षुषोर्मम भवन्मुखेक्षणं
सुभ्रु नूनमहिफेन-भक्षणम् ।
तद्विना विधुरयोर्न चेतना
रुक् च शाम्यति न तन्निकेतना ।।६।।
चिन्तामणि-दीक्षितस्य ।।

२८० पादे स्वर्ण-तुला-कोटौ हेमाद्रौ हृदये तव ।
कुण्ठिताऽसि कथं कान्ते वैकुण्ठे तनु-दानतः ।।७।।
कविराजस्य ।।

२८१ कनकं सुगन्धि तव तन्वि वपु-
र्मधुरं मणिश्च सखि तेऽप्यधरम् ।
निगडं सुखस्य करणं भवतीं
सृजतो विधेर्निरवधिर्महिमा ।।८।।
बिन्दोः ।।

२८२ उन्मीलत्पुलकं विलोलदलकं स्विद्यत्कपोलस्थलं
भ्राम्यत्[1] कुण्डलमाकुलाकुल-लसत्सीत्कारमुद्यत्करम् ।

किञ्चित् कुञ्च[2]दुदञ्चितभ्रु विलसच्चोलं गलन्नीविकं
स्याद्भूयोऽपि कदा मदाकुलदृशोबिम्बाधरास्वादनम् ॥९॥

कविकङ्कणस्य ॥

२८३ आलिङ्गनाधर-सुधा-रसपान-वक्षो-
निष्पी[1]डनादिविधिरस्तु विदूरतस्ते ।
यत्त्वं विलोकयसि चञ्चल-दृङ्निपातै-
रेतावतैव हरिणाक्षि वयं कृतार्थाः ॥१०॥

वेणीदत्तस्य ॥

॥ (२) अथ विप्रलम्भः—प्रियस्य ॥

२८४ हा गता यामिनी नाऽऽगता कामिनी
सा कुतो भामिनी का गतिर्भाविनी ।
संतनोति व्यथां मन्मथोऽयं यथा
दुःसहेयं व्यथा किं वदामो वृथा ॥१॥ गोविन्द-भट्टस्य ॥

२८५ वकुल-मालिकयाऽपि मया न सा
समनुभूषि (?) तदन्तर-भीरुणा ।
तदधुना विधिना कृतमावयो-
र्गिरिदरी-नगरी-शतमन्तरम्[1] ॥२॥

मत्कृतिः (24a) ॥

---

२८२। 1. MS. भ्रम्यत्। 2. MS. कञ्चि०।
२८३। 1. MS. निपी। SA. v. 640.
२८५। 1. MS. ०मन्तरा। SSS .v. 556.

२८६ दृष्ट्वा चन्दन-पङ्कमङ्गवलितं धत्ते मणिं गारुडं
गच्छन्नातपवारणं मृगयति ज्योत्स्नोज्ज्वलायां निशि ।
किन्त्वान्यत् कथयामि कोकिल-रुतं[1] श्रुत्वा करौ कर्णयोः
कुर्वञ् जैमिनि-जैमिनीति जगतामीशो मुहुर्जल्पति ॥३॥
कृष्णदासस्य ॥

२८७ क्रिया सर्वस्याधो नयति विदिताऽस्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्म-विषयाम् ।
सखीषु स्मेरासु प्रकटयति[1] वैलक्ष्यमधिकं
प्रिया प्रायेणाऽऽस्ते हृदय-निहितातङ्क-विधुरा ॥४॥
रत्नावल्याः ॥

२८८ अत्राश्रितं शयितमत्र निपीतमत्र
सायं तया सह मया विधि-वञ्चितेन ।
इत्यादि हन्त परिचिन्तयतो वनान्ते
रामस्य लोचन-पयोभिरभूत् पयोधिः ॥५॥
कस्यापि ॥

---

२८६ । 1. MS. ०रुतौ ।

२८७ । 1. MS. प्रगटयति । SSS. v. 557 ; DR. p. 80, v. r. a…हरति… । c. (सखीषु) स्मेरासु…। KS. p. 398, b. 10, v. r. a. क्रिया सर्वस्यासौ हरति…। b…कवयति…। c. (सखीषु) स्मेरस्ते…वैलक्ष्यमिति मे । d…विधुरम् ।

२८८ । SSS. v. 558.

२८९ अपि शारदचन्द्रिका यदीयां
तुलनां गच्छति दुष्करैस्तपोभिः ।
न तदुज्झति मानसं मदीयं
हसितं खञ्जन-मञ्जु-लोचनायाः ॥६॥

२९० मयि प्रणय-पेशले हरति कौतुकात् कञ्चुकं
कुचौ सपदि सङ्कुचत्तनुतया तया संवृतौ ।
अथ स्पृशति सस्पृहं मदन-जीविकां नीविका-
मकारिषत[1] सुभ्रुवा कतिविधा न काकूक्तयः ॥७॥
मोहनस्यैतौ ॥

२९१ अहो विधात्रा हतकेन नार्यात्
कृतो वियोगोऽपि वियोगिनां नः ।
रथाङ्गनाम्नामिव येन सीमा
न विद्यते नापि सपत्नवत्त्वम् ॥८॥ माधवस्य ॥

२९२ आयाते मयि नेक्षितं न गदितं संभाषिणि क्लिश्यति
व्याधू (24b) तं नमितं विचुम्बति मुखं तन्व्या सखीनां पुरः ।
आगस्कारिणि पादयोः प्रणिपतत्युत्थाय यान्त्या: कियत्
प्रेयस्याः परिवृत्य[1] वीक्षितमहो तत् केन विस्मार्यते ॥८॥
रायभट्टस्य ॥

---

२८९ । SSS. v. 560.
२९० । 1. MS. ०षत ।
२९२ । 1. MS. परिवृत्त ।

॥ (३) अथ विप्रलम्भः—प्रियायाः ॥

२८३ दुल्लह-जणाणुराओ लज्जा गरुइ परवसो अप्पा[1] [अ]।
पिअ-सहि विसमं पेम्मं[2] मरणं सरणं णवरमेक्कम् ॥१॥
रत्नावल्याः ॥

२८४ पिअ-सहि कस्स कहिज्जं[1] को उण जाणादि परस्स[2] वेअणं गरुअं।
मम उण तुहिण-मरीची दइअ-विओएण दूसहो होइ ॥२॥
सदाशिवस्य ॥

२८५ अइ परदेसि सिणेहो पढमं महुरो तदो कूरो।
ता परवसणिअ-हिअओ जीवइ कन्ता-जणो केण ॥३॥
रामचन्द्रागमिनः ॥

२८६ अच्चरिअं अच्चरिअं मम्मह[1]-सर-भेदिए हिअए।
चिट्ठंति[2] पाण-वाआ पिअ-विरह-दूसहे सहीए ॥४॥
वेणीदत्तस्य ॥

॥ (४) अथ नायिका-भेदाः ॥

॥ तत्र मुग्धा ॥

२८७ असम्मुखालोकनमाभिमुख्यं
निषेध एवानुमति-प्रकारः।

---

२८३। 1. MS. अप्सा। 2. MS. पेस्सं। DR. p. 13. SKB. v. 177. p. 324, v. r. d…णवरिएक्कं।

२८४। 1. MS. हिज्ज। 2. MS. रस।

२८६। 1, MS. मस्मह। 2. MS. तिष्ठन्ति।

प्रत्युत्तरं मुद्रणमेव वाचां
नवाङ्गनानां नव एव पन्थाः ॥१॥ वाहिनीपतेः ॥

२९८ पल्यङ्के पदमर्पयेति शनकै[1]रुत्तेजयन्तीं सखीं
भ्रू भङ्गेण[2] निवार्य वाम-चरणाङ्गुल्या लिखन्ती भुवम् ।
कान्ते कैतव-निद्रया दर-मिलन्नेत्रे त्रपाकुञ्चितां
दृष्टिं निक्षिपती क्षणं नववधूः शृङ्गारसारायते ॥२॥

२९९ यदवधि मम जाता श्यामला कापि लेखा
तदवधि मम मातर्गौ (25a) रवं श्रोणिदेशे ।
पद-युगलमपोषन्मन्थरं दन्तुरं हृद्
मयि विकृतिरपूर्वा केयमित्याह बाला ॥३॥

शङ्कर-भट्टस्य ॥

॥ इयमेव नवोढा ज्ञात-यौवना च ॥

३०० अन्तः समेत्यापि बहिः प्रयाति
स्पृष्टा विधत्ते त्ववगूहनानि ।
दष्ट्वाऽधरं रोदिति[1] शुष्कमेव
सैवं विलासैस्तपसाऽप्यलभ्या ॥१॥ माधवस्य ॥

३०१ सव्रीड-कोपान्नखरप्रहार-
भयेन किं त्वां सुमुखि त्यजामि ।

---

२९७। SSS. v. 789.

२९८। 1. MS. शकै० । 2. MS. न । SSS. v. 828.

२९९। SSS. v. 821. ३००। 1. MS. रोदति ।

परागरूक्षामपि कण्टकाढ्यां
न केतकीं मुञ्चति मत्त-भृङ्गः ॥२॥ तस्यैव ॥

२०२ विकृतं नयनं विकारि वक्त्रो
जठरे क्वापि विलक्षणैव रीतिः ।
सखि किं करणीयमत्र दोषे
गमने मुह्यति मानसं मुहुर्मे ॥३॥

२०३ आनीता शयनाङ्गने प्रियसखीवृन्दैः कथञ्चिच्छला-
च्चित्राक्रान्त-कुरङ्गिकेव विगलन्नेत्राम्बु-धाराततिः ।
बाष्पोद्गासमुखी विधूनित-करा निक्षेपिताङ्घ्रि-द्वया
विष्वग्वेल्लित-कुन्तला नववधूर्भाग्येन संभुज्यते ॥४॥
वेणीदत्तस्य ॥

२०४ अन्तर्मार-रसार्द्रा गुरुगुण-बद्धाऽनुकूलतां धत्ते ।
निष्ठुर-वाह्याकारा दृतिरिव पति-सन्निधौ नव्या ॥५॥
कवीन्द्रस्य ॥

॥ इयमेवाविश्रब्ध-नवोढाऽतिप्रश्रयादतिविश्रब्ध-नवोढा, यथा ॥

२०५ दर-मुकुलित-नेत्रपालि नीवी-
नियमित-बाहु कृतोरुयुग्म-बन्धम् ।
कर-कलित-कुचस्थलं नवोढा
स्वपिति समीपमुपेत्य कस्य यूनः (fol. 25b)॥१॥
भानुकरस्य ॥

२०६　　मुहुः ससीत्कारमुदञ्चितभ्रु

　　　　ग्रीवोपधानीकृत-बाहुमूलम् ।

　　　　बलात् कराग्रोन्नमितास्यमोष्ठं

　　　　प्रिया पतिं पाययते सरोषम् ॥२॥　　माधवस्य ॥

॥ अथ मध्या ॥

२०७　　प्रेम कान्त-दिशि कर्षति चक्षु-

　　　　र्लज्जया मुहुरपि ह्रियमाणम् ।

　　　　कृष्यमाणमसकृद् गुणवल्ग्या

　　　　डिम्भहस्त इव कर्षति चापम् ॥१॥

चिन्तामणेः ॥

२०८　　व्याज-स्थितिर्मन्दगतिः सलील-

　　　　व्यावर्तनं काञ्चन-हंसकस्य ।

　　　　चेलाञ्चलाकर्षणमिन्दुमुख्याः

　　　　पार्श्व-स्थिते[1] यूनि मनो व्यनक्ति ॥२॥

माधवस्य ॥

२०९　　कपट-कलित-निद्रं[1] मन्दमालोकयन्ती

　　　　प्रियमधर-मधूनि स्वेच्छया पातुमैच्छत् ।

　　　　मदन-मद-मनोज्ञा लज्जयाकृष्ट-चित्ता

　　　　मुकुलित-मुखपद्मा चित्र-संस्थेव तस्थौ ॥२॥

वेणीदत्तस्य ॥

---

२०८ । 1. MS. ०स्थितो ।　　　२०९ । 1. MS. मन्द्रम् ।

॥ अथ प्रौढा ॥

३१० उद्‌ग्रन्थ्य[1] वीटी-ग्रथनं नतभ्रू-
राच्छाद्य वक्षःस्थलमञ्चलेन ।
उत्तारयन्ती निविडं निचोलं
मनोभवस्यापि मनो मिनोति ॥१॥ माधवस्य ॥

३११ एकाङ्‌घ्रिं विनिधाय कान्त-चरणे तज्जानुदेशे परं
लीलोदञ्चित-मध्यमा करयुगेणाऽऽबध्य तत्कन्धराम् ।
वक्षस्तस्य घनोन्नत-स्तनयुगेनाऽऽपीड्य गाढं रमा-
दास्यं धन्यतमस्य पूर्ण-पुलका चन्द्रानना चुम्बति ॥२॥
रायभट्टस्य ॥

३१२ एषा व्रजन्ती ललितं स्मयन्ती
सखीजनैः सार्धमतिप्रगल्भा ।
सुरीव नित्यं सुरतासुखाप्ता[1]
विभाति भूमीधर-पाठक-स्त्री ॥३॥
औदीच्यप्रकाशस्य ॥

॥ अथ परकीया ॥

३१३ यान्ती पुरस्तात् सह वेत्रवत्या
चेत्यङ्‌मती-नायक-कन्यकेयम्[1] ।
आलिङ्गते पान्थ तदा तव स्यात्
किं देवकान्ता-सुरताभिलाषः ॥१॥ माधवस्य ॥

३१० । 1. MS. ग्रथ्य । ३१२ । 1. MS. ०सुखाप्ता ।
३१३ । 1. MS. कन्यक्षेयम् ।

२१४ कञ्जानना कञ्ज-पराग-पुञ्ज-

गुञ्जन्मिलिन्दावलि-[1]कुन्तल—(fol. 26a)श्रीः ।

विद्वद्वि[2]जाक्रान्त-मुखा[3]न्तराला

ज्योतिर्विदार्या तटिनीव[4] भाति ॥२॥

औदीच्यप्रकाशस्य ॥

२१५ वियोगिनां योगगुरौ मनोज्ञे

वृन्दावने युक्तिमुपैति चेतः ।

नित्यं पराधीनमहो वयस्ये

सख्ये चकोरः[1] सुतरां रहस्ये ॥३॥

ममैव ॥

२१६ ऋजु-नयन-निपातः कामतन्त्राभिघात-

स्तनुरपि तरलाक्ष्याः कस्य न स्यात् कटाक्षः ।

इति नमित-मुखेन्दुं पश्यति प्राणनाथं

जन-सदसि विदग्धा पक्ष्मणामन्तरेण ॥४॥

मोहनस्य ॥

॥ अथ कुलाङ्गना ॥

२१७ पदन्यासो गेहाद्बहिरहि-फणारोपण-समो

वचो लोकालभ्यं कृपण-धन-तुल्यं मृगदृशः ।

---

२१४ । 1. MS. ०वनि० । 2. MS. विद्द्विजा० । 3. MS. सुखा । 4. MS. तटीनीव० । २१५ । 1. MS. वकोरः ।

निजाद् गेहादन्यद्भवनमपर-द्वीप-तुलितं
पुमानन्यः कान्ताद्विधुरिव चतुर्थी-समुदितः ॥१॥
कस्यापि ॥

३१८ सञ्चारो रति-मन्दिरावधि सखी-कर्णावधि व्याहृतं
चेतः कान्त-समीहितावधि महामानोऽपि मौनावधि ।
हास्यञ्चाधर-पल्लवावधि पदन्यासावधि प्रेक्षितं
सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम् ॥२॥
मैथिलस्य ॥

३१९ पुरो मयि समागते सहचरी-समाजस्थिता
ह्रिया किमपि न प्रिया कृतवती वचःसंभ्रमम् ।
परन्तु निभृतोल्लसत्स्मित-सुधावदात-त्विषा
तुषारकर-कौमुदी-मुदमदत्त मन्नेत्रयोः ॥३॥
मोहनस्य ॥

३२० मामागतं वीक्ष्य गृहान्तराल-
द्वारेऽद्वितीय-सुषमा-परिपूरिताङ्गी ।
वाक्यामृताम्बु-नयनाम्बुज-पाणिपद्मैः
सम्पूज्य मन्मुख-[1]मुखी सुमुखी ससाद[2] ॥४॥
वेणीदत्तस्य ॥

---

३१७। *SR*. v. 5, p. 136, in this book, 2nd line is 3rd line and third is 2nd as Compared with our MS. v, r. e. निजवासादन्य। SA. v. 220 ३१८। SA. v. 221.
३२०। 1. MS. सम्मुख। 2. MS. सपाद।

॥ अथ सामान्य-वनिता ॥

३२१ केशः कुन्दमिषादिवोपहसति द्रवैरविंहीनाञ्जनान्
यूनां ग्रन्थिधनं विलोकितुमिवोद्ग्रीवस्तनस्तिष्ठति ।
प्रेमच्छेद-कृपाणवल्लि-सुषमां रोमालिरालम्बते
यस्याः सा कथमस्तु चेतसि चमत्काराय वामक्रमा[1] ॥१॥
भानुकरस्य ॥

३२२ दृक्पाते बहवः पयोधर-कराघाते महाकामिनः
केऽप्यालिङ्गन-कर्मणि प्रविगलद्दर्पा भवेयुः क्षणात् ।
प्रौढानङ्ग-सुखार्पको न हि युवा दृष्टोऽस्ति कोऽपि क्षिता
सख्यः सत्यमिहाऽऽलपामि सततं निर्भोगि भूमीतलम् ॥२॥
वेणीदत्तस्य ॥

३२२ अकाण्डे वक्षोज-स्खलित-वसन-व्यापृतकरं
मृषा जृम्भारम्भोन्नमित-भुजबन्धोन्नत-कुचम् ।
वृथा यातायातैः कपट-कलितान्योन्य-हसितं
हरन्त्येताश्चित्तान्यहह जगतां वारवनिताः ॥३॥
मधुसूदन-सरस्वत्याः ॥

॥ अथ कुलटा ॥

३२४ ग्राह्याः समुद्रेषु[1] जलेष मत्स्याः
फलानि वृक्षेष महीष घासाः ।

---

३२१ । 1. MS. वामक्रमः । SkB. v. 10, p. 355 v. r. d...(चमत्काराय) वाराङ्गना ।

क्षता यदा सुप्रः पुरुषा विधात्रा

तदा रतिः सद्यात् कुलटाजनेषु ॥१॥ ममैव ॥

३२५ दुर्दिवसे घनतिमिरे दुःसञ्चारासु रजनीषु ।

पत्युर्विदेश-समये परमसुखं जघनचपलायाः ॥२॥

जघनचपलायाः ॥

३२६ मनो[1]भुवः कार्मण-मन्त्रशक्ति-

र्मनस्विनीयं मनुते मनो मे ।

यतो मनाग् यं जनमीक्षतेऽसौ

सोऽन्धः स मूकः स (27 a) कृशः स मूढः ॥३॥

माधवस्य ॥

॥ अथ कुलटोपदेशः ॥

३२७ चाञ्चल्यं स्वदृशोरधीष्व पुरुष-स्वान्तेङ्गितज्ञा[1] भव

व्यक्तं चापि विमुञ्च मार्दवमथाकर्षान्तरं कामिनाम् ।

किं पादार्पित-दृष्टिरप्यसि कुचौ किं वाऽपि धत्से मुधा

पुत्राालिङ्गन-चुम्बनैर्धनपतीन् किं मङ्क्षु नोल्लुण्ठसि ॥४॥

रामजितः ॥

---

३२४ । 1. MS. समुद्रे ।

३२५ । SP. v. 3767, p. 566, v. r. a…(दुःसञ्चारासु) नगरवीथीषु । SR. v. 19, p. 139, v. r. a. same as in SP. b…विदेश-गमने । SHV. v. 1837.

३२६ । 1. MS. नमो० । ३२७ । 1. MS. ०ष्टान्तेसितज्ञा ।

३२८ दिनं निशालोक इहास्ति नैशं
राजा मनोजः कुलटाजनस्य ।
स्वधर्म एवाखिललोक-भोगः
स्वर्गः परं पुंश्चि-मचारतं नः ॥३॥

वेणीदत्तस्य ॥

॥ अथ ज्येष्ठा कनिष्ठा च ॥

३२९ सुधांशु-कल्पे मृदुनि स्वतल्पे
प्रियेऽतिनिद्रेऽनुकलय्य कोऽपि ।
आलिङ्ग्य चैका[1]मपरां निगूह्य
मनोज-सञ्जीवनमाततान ॥१॥ ममैव ॥

३३० कुचं निपीड्यायत-लोचनाया
वक्त्रामृतं भूरितरं निपीय ।
आलिङ्ग्य चान्यां सुखसिन्धुवन्यां[1]
धन्योऽतनोन्मान्मथ-रङ्गभङ्गैः[2] ॥२॥ अयमपि ॥

॥ अथ सौन्दर्य-गर्विता ॥

३३१ भामिन्यो विदधत भागधेयभाजः
केयूरं स्रजमवतंसमम्बुजातैः ।
धिग् दैवं मम तु विभूषणं विदूरे
रोलम्बादधर-निवारणं पुमर्थः ॥१॥ कस्यापि ॥

---

३२९ । 1. MS. ०मेका० ।

३३० । 1. MS. कन्यां । 2, MS. ०भङ्गीः ।

३३२ पादालक्तक-गौरवादपि गतिर्मन्दत्वमापद्यते
नीवीबन्ध-परिश्रमादपि भुजः सञ्जायते संश्लथः ।
संश्लेषात् कुसुम-स्रजोऽपि च तनुस्ताम्रत्वमापद्यते
सख्यः किं करवाणि भूषण-कलामात्र-प्रिये प्रेयसि[1] ॥२॥

दाक्षिणात्यानाम् ॥

३३३ स्नेहस्य सौगन्ध्य-भरेण (27 b) गुर्वी
स्नातापि कालागुरु-धूपसारैः ।
गन्तुं न शक्नोमि पदं वयस्य
कान्तस्तथापीच्छति भूषणं मे ॥३॥

वेणीदत्तस्य ॥

॥ अथ प्रेम-गर्विता ॥

३३४ रत्नादिभिः सन्तनुते विभूषां
धन्याङ्गनानां हृदयाधिनाथः ।
सौभाग्यवल्लीमय-डोरकं मे
प्रियोऽन्तरायं कलयत्यतीव ॥१॥ वेणीदत्तस्य ॥

॥ अथ लज्जिता[1] ॥

३३५ काचिन्निदेशाज्जरती-जनानां
कुलोचितं किञ्चिदिहाऽऽलपन्ती ।

३३२ । 1. MS. प्रेयसी ।
३३५ । 1. MS. लचिता ।

कुङ्कुमालेखनमाचरन्ती
संज्ञापितालीभिरभूत् सलज्जा ॥१॥
माधवस्य ॥

२२६ माङ्गल्य-गानं सहसा चरन्ती
कुलाङ्गनाभिः सह संसदन्तः ।
जारं समालक्ष्य वचः सृजन्ती
संज्ञापितालीभिरभून्नतास्या[1] ॥२॥
वेणीदत्तस्य ॥

॥ अथ गुप्ता ॥

२२७ त्वत्पाणि-संस्पर्शज-रोम-हर्षं
लीलाञ्चिताङ्गी बत सा कृशाङ्गी ।
तल्पे शयाना गुरु-सन्निधाने
शीत-ज्वरं कल्पयति सकम्पा ॥१॥ माधवस्य ।

२२८ त्वत्पञ्चशाखानुगता सकम्पा
स्तनोपपीडं गुरुसन्निधौ च ।
भ्रान्त्वाऽपतद्भूमि-तले ह्यकाण्डं
भूत-भ्रमं भावयती (?) गृहेषु ॥२॥ ममैव ॥

॥ अथ विदग्धा ॥

२२९ गतः पतिर्यद्यपि दूरदेशं
नावेक्षकः कश्चन यद्यपीह ।

२२६ । 1. MS. ०धन्नतास्या ।

श्वश्रूर्मुमूर्षुस्तदपोह्य सायं
पान्थाद्य कर्तास्मि तवातिथेयम् ॥१॥
माधवस्य ॥

३४० भव्या स्थितिः पान्थ तवाथ तत्र
वंशी-वटे कृष्णनदी-तटे स्यात् ।
पुरात् प्रयातस्य मधोः सलीलं
मध्यंदिने वैष्णव-सङ्गमाय ॥२॥ वेणीदत्तस्य ॥

३४१ इदं शीतं पाथः[1] पिबत पथिका मुञ्चत मनाक्[2]
पथः श्रान्तिं कान्ता-स्मृति-जनित-चिन्ता-(fol. 28a)
द्विगुणिताम् ।
इति स्फीतापाङ्गं मृदु-मधुरवाग्भङ्गि-हसितं
प्रपापालीमाला हरति तरुणानां पथि गतिम् ॥१॥
मधुसूदन-स्वामिनाम् ॥

॥ अथानुशयाना ॥

३४२ कर्ण-कम्पित-रसाल-मञ्जरी-
पिञ्जरीकृत-कपोल-मण्डलः ।
निष्पतन्नयन-वारि-धारया
राधया मधुरिपुर्निरीक्ष्यते[1] ॥१॥ भानुकरस्य ।

---

३४१ । 1 MS. पाथ्यः । 2 MS. मग्नाक् ।
३४२ । 1 MS. निरोच्यते । SA. v. 270.

३४३ अयं रसालः सुकृतैकसालः
प्रवाल-मालोल्लसदालवालः ।
मुदः[1] प्रदाता भविता कथं मे
वराङ्गनेत्यश्रुमुखी शुशोच ॥२॥

३४४ गवाक्ष-दृष्ट्या निभृताम्बु-वृष्ट्या
वनोपयातो हरिरब्ज-हस्तः ।
व्यलोकि लोकाकुलया तयासौ
[1]त्रपावरुद्धागमया स्मितास्यः ॥३॥

वेणीदत्तस्यैतौ ॥

॥ अथ प्रोषित-पतिका[1] ॥

३४५ किं कर्तव्यं गतवति हरौ मान्त् हित्वाऽतिदूरे
कामः कामं दहति हृदयं निर्दयः स्त्रीवधेऽपि ।
नूनं मन्ये सुमुखि यदसौ पूतना-हन्तृ-पुत्रः
सत्यं शास्त्रं श्रयति च गुणान् कारणस्यैव कार्यम् ॥१॥

कविराजस्य ॥

३४६ कियन्त्यो नैतस्यां व्रज-भुवि युवत्यः स्मरकला-
कुलापेता गीतामृत-विजित-वीणाः सुवदनाः ।
वयस्यारक्ता[1] वा कति न वनिता नन्दतनये
हतायाः को हेतुः शिव शिव ममैवाऽऽधि-जलधेः ॥२॥

---

३४३ । 1 MS. मुद० ।
३४४ । 1 MS. नपा० ।
३४५ । 1 MS. ०पथिका ।
३४६ । 1 MS. वयस्य रक्ता ।

३४७ भ्रमः कामं वाम त्वयि समुदितः काम कुमते
यदस्या[1] हृद्देशे क्षिपसि निशितान् पौष्प-विशिखान् ।
प्रिये यास्यामीति व्रजपति-सुतस्योक्ति-समये[2]
विदीर्णं यन्नाऽऽसीदशनिरपि कस्तस्य दलने ॥३॥

मधुसूदन-सरस्वत्याः (fol. 28b) ॥

३४८ लज्जान्वितायास्तनु[1]मध्यमायाः
प्रसज्जितस्यापि जनैः कथासु ।
प्रेमा[2] प्रियस्य प्रतिनिह्नुतोऽस्या
बाष्पैरगोप्यैः[3] प्रकटीबभूव ॥४॥

माधवस्य ॥

३४९ लिखति न गणयति रेखां निर्भर-बाष्पाम्बु-धौत-गण्डतला[1] ।
अवधि-दिवसावसानं मा भूदिति शङ्कया बाला ॥५॥

मोरिकायाः ॥

३५० दिने दिने पाण्डुतराङ्ग-यष्टिः
क्षीणा परं चन्द्रकलेव तन्वी ।
सुवन्दिनी यैव बभूव लोके
सा पूर्णिमां प्राणपतेः स्मरन्ती ॥६॥

वेणीदत्तस्य ॥

---

३४७। 1 MS. प्यदस्या। 2 MS. समग्रे।

३४८। 1 MS. ०स्तम[illegible]०। 2 MS. प्रेम। 3. MS. ०गोप्यैः।

३४९। 1 MS. तु[illegible]ण्डलता। SSV. v. 1072, p. 178, v. r. d…शङ्किता…। SP[illegible] v. 3403, p. 495, v. r. Same as in

॥ अथ प्रवसत्-पतिका[1] ॥

३५१ प्रस्थाने शकुनानि सन्तु सततं भद्रं तवोज्जृम्भता-
मादायेप्सितमाशु तात-चरणाम्भोजं समालोकयेः ।
याचेऽहं विधिमत्र हन्त जविनामग्रेसराणां मम
प्राणानां प्रिय मास्म भूः पथि भवद्विश्लेष-लब्धागमः ॥१॥
रायभट्टस्य ॥

३५२ समुद्युक्ते गन्तुं क्षणतनु हृदीशे प्रथमतः
प्रयाणे प्राणानां हृदय-सदनात् कण्ठ-कुहरे ।
समादातुं प्रायो गुण-गणन-पाथेय-शतकं
चिरा[1]रम्भेष्वेष द्रुतमहह[2] नाथेन चलितम् ॥२॥
मधुसूदन-स्वामिनाम् ॥

३५३ यावद्यामीति वाणीं निगदति रमणीं प्राणनाथः प्रयाणे
तावत्तत्-प्राण-मित्रैर्व्यरचि तु पुरतः सङ्गतिः कण्ठमार्गे ।

---

SSV. ; SMV. v. 8, p. 134, v. r. Same as in SSV. SRB. v. 6, p. 275, v. r. b. निर्झर···(गण्ड) तटा । d. Same as in SSV. Sanskrit Poetesses Part A, 2nd edition. v. 46, p. 20, v. r. a... रेखां । b. निर्झर...(गण्ड) तटा । d. same as in SSV. SA. v. 712 (anon). SHV. v. 1966 (anon). PR. v. 13, p. 48···

३५१ । 1 MS. प्रोष्यत्पथिका ।

३५२ । 1 MS. चिषा० । 2 MS. मह ।

दृष्ट्वा तन्वी व्रजामीत्यनुवदति हठात् फुल्लमानाङ्गयष्टे-[1]
स्त्रूली-चोलाङ्गभूषा झटिति चटचटेत्येव भङ्गं समीयुः ॥३॥
वेणीदत्तस्य ॥

॥ अथ खण्डिता ॥

३५४ प्रातः प्रत्यागतं श्रीपतिमरि[1]वनितालक्तकाङ्कञ्च वेणी-
स्नेहाप्तक्तोत्तरीयं नखरुचि-कुसुमैरर्चिताङ्गं निरीक्ष्य ।
कृत्वाऽभ्युत्थानमारादथ मणि-रुचिरं स्वासनं चापि दत्त्वा
कृत्वाऽग्रे दर्पणं द्राक् स्मित-रुचि-सुभगा नम्रितास्या बभूव ॥१॥
वेणीदत्तस्य ॥

३५५ प्रातस्तल्पान्तमेनं पर-युवति-पदालक्तकाङ्कातिकान्तं
कान्तं दृष्ट्वा स्फुरन्ती स्फुरदधरपुटा नम्रदृक्-प्रान्त-कान्तिः ।
अन्तः कोपोपरक्त-स्मितरुचि-विचलन्मौलि सम्यग् विभासी-
त्येवं भूयो वदन्ती कलयति रुचिरा मानमुच्चैर्महार्घम्[1] ॥२॥
मोहन ओझाकस्य[2] ॥

३५६ प्रत्यायातं प्रभाते विलुलित-वसनं कज्जलाक्ताधरान्तं
कान्तं दृष्ट्वैव कोपारुणतर-नयना नैव किञ्चिज्जगाद ।
किन्तु (?) शृङ्गारसौधे शुचि-रुचि-विलसज्ञानुपाषाण-मुग्धे
पार्श्वे दृष्टिं क्षिपन्ती व्यदधत (?) रमणं मुद्रिताक्षं क्षणेन ॥३॥
ममैव ॥

---

३५३ । 1 MS. फुल्लमानोङ्गयष्टेः ।

३५४ । 1. MS. पतितिमरि० ।

३५५ । 1 MS. महार्षम् । 2 MS. औपसाकस्य ।

॥ अथ कलहान्तरिता ॥

३५७ मृषा रोषावेषान्नमितवदनायां मयि मनाङ्-
निरालम्बः पश्चादनुसरति यो मे सहचरीम् ।
अतो ब्रूते तस्याः किमिदमिति शुष्यन्मुख[1]विधुः
स कोपादाच्छिन्नः प्रियसखि मया प्राणसुभगः ॥१॥

मधुसूदन-स्वामिनाम् ॥

३५८ निशीथे नो शीतं तुहिनसमये हन्त गणितं
न घर्मां[1]शोरंशोर्भयमपि कृतं घर्म[2]समये ।
किमन्यद् यत्प्रोत्यै कुलयुवति-कीर्तिश्च विहता
मया क्रोधादद्य प्रिय (29a) सखि स कान्तो न गणितः ॥२॥

अयमपि ॥

३५९ यदर्थं देवीनां निचय इह नाके निवसते (?)
भुजङ्गोऽपि स्वैरं पवनलव-भक्षाः प्रतिदिनम् ।
चरन्तोग्रता नार्यो व्रतमतिरसासिक्तमनसो
मया च्छिन्नः क्रोधादहह हतया[1] सोऽपि सुभगः ॥३॥ ममैव ॥

॥ अथ विप्रलब्धा ॥

३६० क्षिति-विलुठित-वेणी वाण[1]भिन्ना यथैणी[2]
मदन-दहन-दीना कान्तहीना नवीना ।

---

३५७ । 1 MS. शुष्यमुख० ।

३५८ । 1 MS. घर्मा० । 2 MS. धर्म० ।

३५९ । 1 MS. तपा ।

३६० । 1 MS. वाल । 2 MS. धयेणी ।

भ्रमण-जनित-पीडा पक्षिणीवास्त-नीडा
मृगयति च मृगाक्षी केशवं कातराक्षी ॥१॥
कविराजस्य ॥

३६१ शून्यं कुञ्जगृहं विलोक्य कुटिलं विज्ञाय चेतोभुवं
दूती नापि निवेदिता सहचरी पृष्टापि नो वा तया ।
शम्भो शङ्कर चन्द्रशेखर हर श्रीकण्ठ शूलिन् शिव
त्रायस्वेति परं तु नीरजदृशा भर्गस्य चक्रे स्तुतिः ॥२॥
भानुकरस्य ॥

३६२ श्वश्रूं प्रतार्यासिलतामिवोग्रां[1]
लज्जानदीं धैर्यबलेन तीर्त्वा ।
नयं भुजङ्गं चरणेन हत्वा
गता भृशं रोदिति[2] शून्यकुञ्जे ॥३॥
वेणीदत्तस्य ॥

॥ अथोत्का ॥

३६३ स्नातं वारिद-वारिभिर्विरचितो वासो घने कानने
शीतैश्चान्दनबिन्दुभिर्मनसिजो देवः समाराधितः ।
नीता जा[1]गरण-व्रतेन रजनी व्रीडा कृता दक्षिणा
तप्तं किं न तपस्तथापि स कथं नाद्यापि नेत्रातिथिः ॥१॥
भानुकरस्य ॥

---

३६२ । 1 MS. सिवोग्रां । 2 MS. रोदति ।
३६३ । 1 MS. नीताज्ज० । SA. v. 288.

३६४ बद्धः किं पृथुभिर्गुणैर्मयि रुषा दुष्टाङ्गनाभिः परं
क्रुद्धैः[1] किं भुजगैर्निरुद्धगमनः किं ध्वान्तमार्गभ्रमी ।
क्रीतः किं नवयौवनैर्निजजनैः[2] किं कार्मणैर्यन्त्रितः
किं वाकर्षण-कर्मभिः पुनरयं प्राणेश्वरः कर्षितः ॥२॥

वेणीदत्तस्य ॥

॥ अथ वासकसज्जा ॥

३६५ भूयो वहिर्भवति मन्दिरमेति भूयो
भूयो विलोकयति वर्त्म गवाक्ष-लग्ना ।
आगन्तुके बत विलम्बिनि जीवितेशे
बाला पलार्धमपि कल्पशतान्यवैति ॥१॥

मोहनस्य ॥

३६६ यथाऽल्पतैलं तनुते प्रदीपं
यथा न सा यन्त्रयते कपाटम् ।
यथा पतिं स्वापयते कथाभि-
र्यूनस्तथाशा[1] न समुत्सुकस्य ॥२॥ माधवस्य ॥

३६७ आकल्प्य तल्पं शशिकान्ति-कल्प-
मुद्ग्रथ्य[1] वीटीः सुरपुष्प-गर्भाः ।
द्वारि दृगन्तान् परिकल्पयन्ती
मनो मनोजस्य चमच्चकार ॥३॥ वेणीदत्तस्य ॥

---

३६४ । 1 MS. बधः । 2 MS. निजद्यनैः ।

३६६ । 1 MS. श्वा ।

३६७ । 1 MS. ग्रथ्य ।

३६८ विश्रामयन्ती नयनं[1] नयन्ती
शय्या[2]रुचिं तापमपाहरन्ती ।
समाश्रिता दीपशिखाङ्गशोभां[3]
वधूरियं भाति विभावरीव ॥४॥ माधवस्य ॥

३६९ निजे वारे वीणा-क्वणितमतिकाञ्चीकल[1]कलं
मृदङ्गादि-क्वाणोत्तरल-वलयालोक-विलितम् (?) ।
वलद्ग्रीवं वेल्लच्छ्रुति-कमल-दोर्वल्लि-नयनं
प्रकुर्वन्ति प्रेम्णा हरिणनयना लास्यविभवम् ।५॥
मधुसूदन-स्वामिनाम् ॥

३७० सायं दाम-ग्रथन-समये लग्नया कर्णमूले[1]
सख्या मन्दस्मित-मधुरया सादरं सूच्यमानः[2] ।
कोऽयं धन्यः कमलनयने यत्कथायां पुरस्ता-
दङ्गुल्यग्रं निजमपि मुहुः सूचिविद्धं न वेत्सि ॥६॥
वंशीमिश्राणाम् ॥

॥ अथ स्वाधीन-पतिका ॥

३७१ सन्त्येव बालाः[1] स्मरकेलिमालाः[2]
सौन्दर्यतो[3] धि (fol. 30b) कृत-दिव्यबालाः ।

---

३६८ । 1 MS. नयं । 2 MS. शप्पा । 3 MS. शोभां ।

३६९ । 1 MS. कन ।

३७० । 1 MS. लग्नमाकर्णमूलं । 2 MS. सूच्यमानः । SRB. v. 18, p. 286, v. r. b...(मन्दस्मित) सुभगया । c. धन्यः कोऽयं··· कथायाः...। SA. v. 250.

३७१ । 1 MS. माला । 2 MS. बाला । 3 MS. ता ।

पादानतो नैव जहाति पार्श्वं
मम प्रियः सौख्यमयस्तथापि ॥१॥

३७२ न मे वचन-चातुरी न च मुखे सुधा-माधुरी
न देहपरिमार्जनोज्ज्वल-दृगन्त-रीतिक्रमः ।
तथापि रमणी-लता-सु[1]भगता-फले भावयन्[2]
कुचौ मम मनःसुहृत्[3] त्यजति नैव पार्श्वं क्वचित् ॥२॥

३७३ किंवा कारणमस्ति कौतुककराः सौन्दर्यभोगाकराः
स्वीयाः[1] सन्ति सहस्रशः सुवदनाः शृङ्गारसिन्धो रमाः ।
यान्तीं मां[2] न जहाति हन्त हरितो व्यातन्वती[3] सर्वतो
मद्रूपा मदनुग्रहस्य मधुरा दृष्टिः प्रियस्याऽऽदरात् ॥३॥
ममैवैति ॥

३७४ अप्राप्त-पुष्पोद्गम-विभ्रमैव
रुद्धा भुजङ्गेन तथा यथेयम् ।
न शक्यते स्प्रष्टुमपीहमानै-
रामोदिनी चन्दन-शाखिकेव ॥४॥ माधवस्य ॥

॥ अथाभिसारिका ॥

३७५ मनस्विनि तमस्विनी जलदजाल-जम्बालिनी
न सञ्चरति कुत्रचित् सुतनु पञ्चबाणेतरः ।

---

३७२ । 1 MS. शुभ । 2 MS. भावयत् । 3. MS. सुहृ ।
३७३ । 1 MS. स्वीया । 2. MS. यान्तीमा । 3 MS. व्यातन्वी

अनुस्मर सखि स्मरं रचय चाभिसारि मनः

प्रसिद्धमिदमासते यदिह साहसे सिद्धयः ॥१॥

मोहनस्य ॥

३७६ अभिसारि सरोजाक्षि यदि गन्तुं समीहसे ।

समाच्छाद्य मुखं याहि प्रयत्नेन प्रियं प्रति ॥२॥

कविराजस्य ॥

३७७ दिवापि रज्जोरपि या बिभेति

प्रतिध्वनेरप्युपयाति भीतिम्[1] ।

गर्जद्घनायां निशि दन्दशूकां-

स्तृणाय साऽमंस्त तवाभिसारे ॥३॥

३७८ तथाऽवगुण्ठयाञ्चल[1]मेति नम्रा

यज्[2]ज्ञायते वेत्ति न किञ्चिदेषा ।

अस्यास्तु जान (fol. 31a) न्ति विशुद्धलीलां

वीथी-तमःकुञ्ज-लतागृहाणि ॥४॥ माधवस्यैतौ ॥

३७९ धृत्वा नीलघटीं निबध्य च कटीं त्यक्त्वा स्वपादाटनीं

कृत्वा नीलपटीर[1]मञ्जुल-वलद्वक्षोज-रम्याभटीम् ।

दत्त्वा धैर्य-भुजङ्ग-मूर्धनि चटीं तीर्त्वाऽद्रिभीमां[2] तटीं

यान्ती कस्य न विस्मयाय तरुणी गर्जद्घनायां निशि ॥५॥

वेणीदत्तस्य ॥

---

३७७ । 1 MS. भितिम् ।

३७८ । 1 MS. ञ्चल । 2 MS. यन् ।

३७९ । 1 MS. परीर । 2 MS; भीमा ।

३८० आयातासि विमुञ्च वेपथु-भरं दृष्टासि केनापि नो
नोलं चोल[1]ममुं विमुञ्च हरतु स्वेदं निशीथानिलः ।
इत्यन्तर्भय-सन्नकण्ठमसकृद् यामीति तल्पं गता
त्रस्यन्ती परिरभ्यते सुकृतिभिः स्वैरं नव-स्वैरिणी ॥६॥

जगज्जीवनस्य ॥

॥ अथ ज्योत्स्नाभिसारिका ॥

३८१ भुजङ्ग-[1] निर्मोकजिदच्छशाटी
पाटीर-कर्पूर-कृताङ्गरागा ।
स्मितैः सन्मौक्तिकिनी निशायां
चान्द्री कलेवाऽऽलयमाजगाम ॥१॥

३८२ वलक्ष-रत्ना[1]भरणाच्छकान्तिः
स्निग्धीकृतोच्चन्द्र-[2] मनोज्ञमार्गा ।
यान्ती भुजङ्गीव विकञ्चुकी सा
दृगन्तरे कस्य न विस्मयाय ॥२॥

---

३८० । 1 MS. बोल० । SP. v. 3779, p. 569 ; SMV. v. 11, p. 256, v. r. a...(दृष्टाऽसि) किं केनचित् । c...तल्पातिथिः । d. जल्पन्ती...सुकृतिना । SR. v. 22, p. 140. v. r. b... चोलमिदं...। SRB. v. 47, p. 353, v. r. a...दृष्टासि नो केनचित् । d. जल्पन्ती । SA. v. 310.

३८१ । 1 MS. ङ्ग ।

३८२ । 1. MS. रत्ना । 2 MS. श्चन्द्र ।

३८३ स्मृत्वा श्रीपति-पादुकां गुरु-सखी-वाक्यञ्च कृत्वा हृदि
स्थित्वा धैर्य-तुरङ्गमोपरि पुरः कृत्वा मनः सेवकम् ।
दत्त्वा मानधनं द्विजातिपतये पुंभावविषोज्ज्वला
संयाति स्मर-सङ्गराय तरुणी सङ्केतित-स्थानके ॥३॥

वेणीदत्तस्यैति[1] ॥

३८४ नवाभिसारिण्यधुना निशीथे
निरन्तर-द्योतित-विद्युदभ्रे[1] ।
गौराङ्गि वासः परिधेहि गौरं
विमुञ्च नीलं प्र (fol. 31b) तिकूलमेतत् ॥४॥

माधवस्य ॥

॥ अथ दिवसाभिसारिका ॥

३८५ यान्ती कान्तगृहात् स्व-तात-निलयस्याऽऽज्ञां गृहीत्वा शनैः
श्वश्र्वाश्वञ्चल-लोचनाद्भुत-गतिर्विद्युल्लतोद्द्योतिनी ।
मार्गान्तर्निजजार-मन्दिरगता त्रैलोक्य-सम्मोहनं
मन्त्रं सञ्चिरती न कस्य मनस[1]स्तोषाय योषा परम् ॥१॥

३८६ प्रान्तोपान्त-पुरान्तराखिलजने याति च दुर्गावने
नव्या नन्दमहोत्सवाय शनकैर्निर्गत्य गेहान्तरात् ।

---

३८३ । 1. MS. वेणीदत्तस्यैतौ ।

३८४ । 1 MS. विद्युतभ्रे ।

३८५ । 1. MS. मनसः ।

मिथ्या-रोग-विभावन-स्थितिमती काचिन्मिषेण स्थितं
कान्तं मारसुख-प्रसार-सुभगं व्यातन्वती सम्बभौ ॥२॥

वेणीदत्तस्यैतौ ॥

॥ अथ कर्कशा ॥

३८७ समेत्य वहिरङ्गणात् कलह-वाक्यमातन्वती
रजः किरति फूत्करोत्यवनिचक्रमास्कन्दति[1] ।
रदैः कटकट-ध्वनिं वहति मोटयत्यङ्गुली-
र्वपुर्दलति सूत्कृतिं कलयति क्रुधा धावति ॥१॥

भानुकरस्य ॥

३८८ गालीं ददाति वितनोति करेण तालीं
स्थालीं दुनोति परिकर्षति केशपालीम् ।
व्यालीव वक्त्र-गरलाऽखिल-दुःखजाली
जालीकृताङ्गवसना कलिकामिनीयम् ॥२॥

वेणीदत्तस्यायम्[1] ॥

॥ (५) अथ दूत्यप्रकार-प्रपञ्च-पारङ्गमा दूती ॥

३८९ विधेहि धैर्यं सखि दुःख[1]मादौ
विधिर्वितीर्याथ सुखं ददाति ।
यथा वसन्तस्तनुते तरूणां
विपत्रतां पल्लवनम्रताञ्च ॥१॥

---

३८७ । 1. MS. ०स्कन्दमिः ।

३८८ । 1. MS. वेणीदत्तस्यैतौ ।

३८९ । 1. MS. दुःकृ० ।

३८० नखप्रहारैर्मुखरीभवन्ती

चकोरनेत्रे मधुर-स्वरेण ।

वीणेव रागं प्रकटीकरोषि

स्थलेऽपि हृत्पङ्कज-लालनीये[1] (fol. 32a) ॥२॥

माधवस्यैतौ ॥

३८१ क्व गृहाणि कुत्र गुरवो ललनानां

हुत्रभयं[1] पुनः सरभसोच्चलनानाम् ।

क्व कुलत्रयं [2]क्व दयिता क्व नु नीतिः

क्व जनादरः क्व च सतामनुनीतिः ॥३॥

दामोदर-भट्टस्य ॥

३८२ संमार्ज्य वक्त्र-कमलं सुनिबध्य वेणीं

कृत्वाऽङ्ग-राग-रचनां रशनाञ्च बद्धा ।

वक्षोरुहे प्रिय-कर-ग्रहणं लिखन्ती

काचित् सखी प्रिय-सखीं विमुखीचकार ॥४॥

३८३ हारस्त्रुट्यतु कङ्कणं निपततु स्रस्तोऽस्तु धम्मिल्लको[1]

भ्रष्टास्तां स्तन-पत्रिका व्रजतु ते मुक्तिं परां नीविका ।

इत्थं स्मेरमुखी विभूषण-विधिं व्यातन्वती तत्सखी

श्यामां भूषण-भूषणामपि शनैस्तिर्यक्स्मितास्यामधात् ॥५॥

वेणीदत्तस्यैतौ ॥

---

३८० । 1 MS. ॰लातनीये ।

३८१ । 1 MS. हुत्रभयं । 2. MS. त्रये ।

३८३ । 1 MS. धम्मिल्ल॰ । SA. v. 470.

३८४ पत्रालीयं न च विगलिता प्रोज्ज्वला पुष्प-माला
धम्मिल्लोऽयं न तु[1] मुकुलितः[2] साञ्जनं नेत्र-युग्मम् ।
नीवी-बन्धो न हि विगलितः सानुरागोऽधरोऽसौ
मन्दाक्रान्ता त्वमसि सरसा सच्चतौ[3] यत् कुचौ ते ॥६॥

कविराजस्य ॥

॥ अथ विरह-निवेदनम् ॥

३८५ कमल-नयन युष्मद्विप्रयोगातुरा सा
सरसि सरसिजान्तः स्नातुकामा ममज्ज ।
द्रुततरमनुयायाद् यावदूर्ध्वं कृशाङ्गी
हरि हरि हरिणाक्षी पङ्कमग्ना बभूव ॥१॥

३८६ तन्वी युष्मद्-विरह-तपनेनातिनिःशोषिताङ्गी
मृद्वी गुच्छ-स्तन-भर-नता शुष्क-पर्णा लतेव ।
तस्यास्तावद् भव यदुपतेऽकाण्डधाराधरस्त्वं
शोक-ग्रीष्मः प्रदहति महाप्राण-मूलं न यावत् ॥२॥ ममैतौ ॥

३८७ त्वन्नाम कर्णाभरणं त्वदीयं[1]
रूपं दृशोरन्तरमायताक्ष्याः ।
हरे त्वदामोदि-पटं वहन्त्या-
[2]स्त्व(fol. 32b) द्ध्यानमात्रं मनसोऽपि वृत्तिः ॥३॥

माधवस्य ॥

---

३८४। 1. MS. ल तु। 2. MS. साच्चतौ।
३८५। SSS. v. 586.
३८७। 1 MS. त्वौदीयं। 2. MS. त्वध्यान०।

३९८ कामाग्निः परिवर्द्धितो विरहिणी-श्वासानिलैर्निर्भरं
तूर्णं तेन कृशानुना कृशतनुर्मुग्धा न दग्धा कथम् ।
बाला लोल-विलोचनाम्बुज-गलत्-सद्वारि[1]-धाराभरैः
सिक्ता सम्प्रति तेन जीवति हरे तां त्वं समुल्लासय ॥४॥

कविराजस्य ॥

॥ (५) अथ नायकाः ॥

॥ तत्रानुकूलः ॥

॥ सर्वदाऽन्यनायिका[1]-पराङ्मुखो भार्यायामेवानुक्षण-
मनुरक्तोऽनुकूलः ॥

३९९ स्त्रह्वी[1] त्वं भव मेदिनि क्षितिधर क्षोराम्बुधौ गम्यतां
चण्डांशो मृदुतां व्रज श्वसन भोस्त्वं स्वेदमुत्सादय ।
मेघाऽऽच्छादय[2] खं सुरेशविटपिंस्त्वं[3] पुष्प[4] वृष्टिं कुरु
प्राणादप्यधिका यतो जनकजा सार्धं मया गच्छति ॥१॥

वेणीदत्तस्य ॥

४०० समाश्रिताया अपि[1] वामभावं
दाक्षिण्यमम्भोज-दृशः[2] प्रियेण ।

---

३९८ । 1 MS. सत्वरि ।

३९९ । 1. MS. नायका । SSS. v. 588. 2 MS. स्त्रहि ०च्छादय । 3 MS. विटपिन् त्वं । 4 MS. युष्प.० ।

४०० । 1 MS. ०मपि । 2 MS. ०दृशः ।

त्याज्यं न हन्त प्रमथाधिपेन
वामार्द्धनारीवपुषेव गौर्य्याः ॥२॥ माधवस्य ॥

॥ अथ दक्षः ॥

सकल-कामिनी-समूह-समान-सहजानुरागो दक्षः ।

४०१ स्निग्धापाङ्ग-च[1]लदृदृशः स्मर-रसावेशाद्गतापत्रपाः
सीत्काराञ्चित-मन्दहास-मधुरालापा [:] स्खलत्-पत्रकाः[2] ।
वाङ्घ्यन्मणिताः(?) प्रकम्प-सुभगाः स्विद्यत्-कपोला लसत्-
सर्वाङ्ग-द्युति-भासुरा[3] ह्यरमयद्गोपीः स ललालयः ॥१॥

४०२ आलिङ्गन् भृशमङ्गकानि सुदृशा[1]मास्यानि चुम्बं नयन्
वक्षोजोरु-नितम्ब-कण्ठ-नखर-श्री-चित्रभावं नयन् ।
बिम्बोष्ठामृतमापिबञ्छिथिलयन् नीवीं[2] कर-क्रीडना-
सङ्गनाति-सहास-केलि-परमः स्वैरं विचिक्रीड[3] ना ॥२॥
दामोदरस्यैतौ ॥

४०३ स्त्रीणां सहस्रमतिरूपभर-स्फुरन्त (?)
कन्दर्प-दर्प-बलदुज्ज्वल-चम्बुकाग्रम् ।
योगीश्वरोऽरमयदद्भुत-रूप-लोलः
श्रीहैहयः कर-सहस्र-तलेन गृह्णन् ॥३॥
वेणीदत्तस्यैतौ ॥

---

४०१ । 1 MS. गलत् । 2 MS. पत्रपाः । 3 MS. भारासुरा ।
४०२ । 1 MS. सदृशा । 2 MS. नीवी । 3 MS. विचक्रीड ।

॥ अथ धृष्टः ॥

निःशङ्क-कृत-बहुल-दोषो[1]भूयो निवारितोऽपि

प्रश्रय[2]-परायणो धृष्टः ॥

४०४ शुण्ठे रिवार्द्र-प्रकृतिं गताया[1]

विलीयते तस्य न नागरत्वम् ।

कटुस्वभावोऽप्यत एव पाके

ददात्यसौ सेवित एव सौख्यम् ॥१॥

४०५ प्रतार्य सङ्कुचतो दिनादौ

तां शाप-दग्धां विरहय्य[1] रात्रौ ।

कृत-स्थितेः क्वापि जडाशयेऽङ्ग

रथाङ्गहृते[2]रिव तेऽनुरागः ॥२॥

४०६ स्व[1]पक्षपातं दधतं गुणेन

त्वां केवलं काङ्क्षति हन्त बन्धुम् ।

न वेद सा रूप-विमूढ-बुद्धि-

र्मुखे शुकस्येव तवानुरागम् ॥३॥ माधवस्येति ॥

---

1 MS. दोष । 2 MS.प्रथय ।

४०४ । 1 MS. गतायां ।

४०५ । 1 MS. विरहस्य । 2 MS. हृते ।

४०६ । 1 MS. सपक्षपातं । 2 MS. ०स्येतौ ।

४०७ आबध्य बाहु-युगलं भवनान्तरालाद्[1]
दूरीकृतोऽपि परिसुप्त-जने निशीथे ।
आगत्य मन्दमनुगृह्य पदौ व्यलोकि
धृष्टो मयाऽप्यतिभयात् सुरते[2] सहासः ॥४॥
वेणीदत्तस्य ॥

॥ अथ शठः ॥

विलासिनी-विषय-कपटः शठः ॥

४०८ करं गृहीत्वा परिमृज्य मन्दं
कटिं निपीड्यानुविमृज्य चोरुम् ।
नीवीमपाकृत्य विलक्षणायाः
शठो मनोजोपनिषत् (?) पपाठ ॥१॥
वेणीदत्तस्य ॥

४०९ नखाहतिर्नन्दन-पुष्प-पूजा
पानं सुधायाः श्रवणं न नीति ।
विमा[1] (fol. 33b) न-यानं चरण-प्रहारः
शाक्रं पदं सङ्गतिरिन्दुमुख्याः ॥२॥

॥ अथ जारः ॥

आचार-हानि-हेतुः पतिर्जारः ॥

४१० स्त्रीत्वे समानेऽपि परत्वमात्रात्
पराङ्गनायां रुचिरभ्युपैति ।

४०७। 1 MS. ०राला। 2 MS. सुरतो।

धूमत्व-साम्येऽपि हि रागभाजां
सुखाय कृष्णागुरु-धूम-रेखा ॥१॥

४११ नियन्त्रित-श्वासमनुक्त-वाक्यं
निरस्त-पल्यङ्कमशब्द-भूषम् ।
निगूढ-दीपं विजनेऽपि चौर्य-
रतं स्मर-स्मेर-दृशः[1] स्मरामि ॥२॥

४१२ धौरस्तपस्वी द्विजराज एष
ब्राह्मण्यमुद्रामयतोह[1] किन्तु ।
कस्याश्चिदस्यां पुरि चेन्न बद्धो
गुणैस्तदा सर्वमिदं वदामः ॥३॥ माधवस्यैते[2] ॥

४१३ मृदुनयन-निपातं मन्द-वाक्यानुयातं
गत-रदन-विघातं किञ्चिदुच्छ्वास-वातम् ।
परिस्पृदित-कुचान्तोद्दल्गु-जंघोरु[1]कान्तं
रतमिति न मतान्तर्यस्य धिक् तस्य जातम् ॥४॥

४१४ संख्यातीतैः प्रयत्नै रतिभय-चकिताप्यागता केलि-कुञ्जे
मन्दं मन्दं वदन्ती स्मित-रुचि-सुभगं गुंगुमिं भृङ्ग-पुञ्जे ।
वेल्लत्-काश्मीर-कृष्णागुरु-हरिण-मदामोदिताङ्गी नताङ्गी
भाग्याढ्यै तेन भोगास्पदमिह भवति श्रीरिवानन्दसिन्धोः ॥५॥
वेणीदत्तस्यैतौ ॥

४११ । 1 MS. ०दृशः ।
४१२ । 1 MS. मुद्रासयतीह । 2 MS. माधवस्यैतौ ।
४१३ । 1 MS. जंघोरु० ।

॥ अथ वैश्विकः ॥

बहुल-वारविलासिनी-विलास-रसिको वैश्विकः ॥

४१५ अद्वैतमेकं सुखमुन्नयन्ती
विस्मारयन्ती जगदेव तन्वि ।
मुक्ताश्रितामात्मरुचिं वदन्ती
वेदान्त-सिद्धान्त-कथेव भासि ॥१॥

४१६ अन्तर्दधानापि कठोरभावं
स्वच्छद्युतिः सा निजमा (fol. 34a) धुरीभिः ।
भुक्ता रसं स्वादुविदां तनोति
[1]गुणोपगूढा सितशर्करेव ॥२॥ माधवस्यैतौ ॥

४१७ मुक्ता-कङ्कण-हार-वस्त्र वलयैरानीय वाराङ्गनां
कन्दर्पोद्धत-दर्प-दीपनकरीं शृङ्गार-जैत्रस्वनाम् ।
अत्यर्थं रमयंस्तथा[1] पुनरियं नो वेद किञ्चिद्यथा
श्वासाशङ्कित-जीवना गज-कराक्रान्तेव सत्-पद्मिनी ॥३॥
वेणीदत्तस्य ॥

॥ अथ वाग्व्यङ्ग्य-समागमः ॥

४१८ आयास्यसि कदा कान्ते मदन्तिकमयि प्रभे[1] ।
इति पृष्टेन्दुवदनाच्छादयद्वाससा मुखम् ॥१॥

---

४१६ । 1 MS. गुंणो० ।

४१७ । 1 MS. रमयन्तथा ।

४१८ । 1 MS. मतिप्रभो ।

४१९ भावी कदावयोः सङ्ग इति पृष्टा विटेन सा ।
विहस्य पाणि-सङ्कोचात् प्रत्युत्तरमुदाहरत् ॥२॥

ममैवैतौ ॥

॥ अथ चेष्टा-व्यङ्ग्य-समागमः ॥

॥ प्रियायाः पुरश्चातुर्य-विशेष-व्यञ्जक उत्तमः ॥

॥ प्रियां प्रति चेष्टया ज्ञात-कुतूहलो मध्यमः ॥

४२० आमर्दयति पाणिभ्यां कान्ते कमल-कोरके ।
सिन्दूर-तिलके बाला कस्तूरी[1]-तिलकं व्यधात्[2] ॥१॥

वेणीदत्तस्य ॥

४२१ यावन्ति दत्त्वाऽवधि-वासराणि
द्वारं स गच्छेत् समयेन येन ।
तावन्ति तेनैव वधूर्निमेषैः
संख्याय सन्देशमदत्त तस्मै ॥२॥ माधवस्य ॥

॥ एतावेव मध्य[1]मोत्तमौ ॥

॥ अधमो यथा ॥

॥ भय-कृपा-लज्जा-शून्यान्तःकरणोऽधमः ॥

२२ याचे त्वां त्यज दुर्नयं [1]सखि [2]विपत्कूपे न मां पातयेः
का वा दैवहता विधास्यति पुनस्तेनैव या सौहृदम् ।

---

४२१ । 1 MS. कस्तूरीं । 2 MS. व्यवात् ।
1. MS. एतावेव ममध्यः ।
४२२ । 1 MS. दुर्नयं । 2 MS. सखि ।

वर्षत्यब्बुधरे भिया[3] यदनयं कुञ्जेषु तद्वञ्चिता
यावज्जीवमपैति[4] (fol. 34b) किं मम हृदस्तद्वज्र-
लेपायितम् ॥१॥ मोहनशोभाकस्य ॥

४२३ [1]नीत्वा निकुञ्जेऽतिमिलिन्द-पुञ्जे
[2]धाराधरोद्ग्रीव-मयूर[3]-पुञ्जे ।
प्रतार्य मां तत्र भुजङ्ग-भीतां
गतः कथं स्यात् सखि मे प्रियोऽसौ ॥
वेणीदत्तस्य ॥

॥ अथाविदग्धाः ॥

॥ अविदग्धो नायको नायकाभास एव ॥

४२४ रागाक्रान्त इहाधरो[1]ऽस्ति नयने यत्[2] साञ्जने चञ्चले
बन्धेनान्वित एव केश[3]-निचयो मुक्ता न नीवी यतः ।
सालेपौ च कुचौ ससन्धि वसनं सग्रन्थि चोलं यत-
स्तन्मन्ये[4] गुरुणा प्रियेण न कृतस्तत्त्वोपदेशस्तव ॥१॥

४२५ कटाक्षैराक्षिप्तः प्रियसखि रहः केलि-भवने
वने पुष्प-व्याजात्[1] कुचयुगमिदं चापि वलितम ।

---

3 MS. भिषां । 4 MS. मयेति ।

४२३ । 1 MS. तत्र नीत्वा ।2 MS. धराधरो० । 3 MS. मयूख० ।

४२४ । 1 MS. इहाधसोरो० । 2 MS. सत् । 3 MS. कोश० ।
4 MS. तन्मध्ये ।

४२५ । 1 MS. व्याजा० ।

रतासक्तं दृष्ट्वा हरिण-मिथुनं चाल्य-हसितं
तथापि प्रेयान्मे न हि किमपि जानाति किमिति ॥२॥
वेणीदत्तस्य ॥

॥ अथ नर्म-सचिवः ॥

॥ असाधारण-रहस्यचारी हास्यादि-विलासक्तन्नर्मसचिवः ॥

॥ स च चतुर्धा ॥

४२६ प्रेप्सुर्जनं दुर्लभमत्र दूत्या
तया तपस्विन् वत वञ्चितोऽसि ।
भाग्यं विना भूरि-सुवर्णकामी
द्रागधातुवादानृतवार्तयेव ॥१॥ माधवस्य ॥

४२७ अजातरोमाम[1]तिसुन्दराङ्गीं[2]
शृङ्गार-वल्लीमिव राजकन्याम् ।
भुक्त्वा द्रुतं[3] क्वापि गतो न चेत्[4] स्याः
स्यात्ते तदाऽनर्थ-निपात[5] एव ॥२॥ वेणीदत्तस्य ॥

॥ अथ पीठमर्दकः ॥

॥ कुपित-स्त्री (fol. 35a) प्रसादकः पीठमर्दकः ॥

४२८ सकपट-वचनेन वञ्चितोऽसौ
कमल-दलाक्षि बहूनि वासराणि ।

---

४२६ । 1 MS. अजातारामा० । 2 MS. सुन्दराङ्गी । 3 MS. भुक्त्वाद्दतं । 4 MS. चे । 5 MS. निपाति ।

कुरु सकृपमतः परं मनस्त्वं
फलतु मनोरथ-पादपो मुरारेः ।१॥ मोहनस्य ॥

४२९ किं भूरि-भाग्ये परिजल्पितेन
नानाकला-कल्पन-कल्पितेन ।
यस्मै मुहुः कुप्यसि मञ्जुवाणि
धन्यः स एवास्ति जगत्त्रयेऽपि ॥२॥
वेणीदत्तस्य ॥

॥ अथ विटः ॥

॥ स्मर[1]-शास्त्रकलाप-कुशलो विटः ॥

४३० सखेऽद्य सौधोपरि विस्फुरन्ती
काचिन्मया हेमलता व्यलोकि[1] ।
शिखण्डिनस्तामवलोक्य तुण्डा-
न्यमण्डयंस्ताण्डव-मण्डलेन ॥१॥ माधवस्य ॥

४३१ वसन्तराजेन तवा[1]धुनाऽमुना
मृगाङ्क[2]-युक्तेन सुधाभ्रकाशिना ।
विनेय एवाखिल-गात्रवर्ती
त्वन्मान-रोगो भिषजा क्षणेन ॥२॥ वेणीदत्तस्य ॥

---

1 MS. स्वर ।

४३० । 1. MS. व्यतोकि ।

४३१ । 1 MS. तारा । 2 MS. मृग्यङ्क० ।

॥ अथ चेटः ॥

४३२ आयाता रतिनायकस्य विपिनं [1]श्रीराधिकाऽभ्यागतो
दैवादेव हरिश्च तत्र चतुरश्चेटोऽपि तत्रागमत् ।
शीघ्रं पर्वत-कन्दरोदरगतं लास्यं शिखीनां पुरः
पश्यामीति हरिं निगद्य शनकैर्गेहं समभ्यागमत् ॥१॥

॥ अथ विदूषकः ॥

॥ मुखाङ्गादि-शब्दैर्हास्यकारी विदूषकः ॥

४३३ तापार्तं रे सौरभ-शाखिकाया-
च्छायामुपास्यापि सुखं लभस्व ।
पुष्पोद्गमेऽस्यास्तु विलोकनेऽपि
त्वां दण्डयिष्यन्ति (fol. 35b) कलङ्कयित्वा ॥१॥
माधवस्य ॥

४३४ समागतां गोपसुतां विलोक्य
वृन्दावने कुञ्जगृहे कदाचित् ।
अकाण्ड-सन्ताडित-दण्डवाद्यं
श्रुत्वा सुखेनातिभयं चकार ॥२॥

४३५ नन्द-नन्दन-पुरः समागतां
राधिकां चटुल-लोचनाञ्चलाम् ।

---

४३२ । 1 MS. विपनं ।

वीक्ष्य कोऽपि वृषभानुवर्त्मने:[1]
संननाद सहसैव सादर: ॥२॥ वेणीदत्तस्यैतौ ॥

॥ अथाष्टौ सात्त्विकभावा: ॥

स्वेदस्तम्भोऽथ रोमाञ्च: स्वरभङ्गोऽथ वेपथ: ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मता: ॥

४३६ स्वेदो भालतले चकास्ति चरणे स्तम्भस्तनौ रोमसुद्-
भेदो वाचि विकम्पनं कुचयुगे वैवर्ण्यमास्ये यत: ।
अस्रं लोचन-पङ्कजे च हृदये लीनं मन: सर्वथा
तन्मन्ये हरिणाक्षि लोचन-पथे नीतस्त्वया केशव: ॥१॥
वेणीदत्तस्य ॥

॥ अथ दशावस्था: ॥

अभिलाष-चिन्ता-स्मृतयो[1] गुणकीर्तनो[2]द्वेग-प्रलापाश्च ।
उन्माद-व्याधि-जडता-निधनानि दशावस्थेति कीर्तिता:
कविभि: ॥

॥ तत्राभिलाष: ॥

॥ संयोगवाञ्छाभिलाष: ॥

४३७ मौनं समालम्ब्य निबध्य नीवीं
स्रस्तांशुकं हस्तयुगेन धृत्वा ।
शेते समीपं समुपेत्य चेन्मे
तेनापि साफल्यमुपैति जन्म ॥१॥ माधवस्य ॥

---

४३५ । 1 MS. घ्राने ।

1 MS. स्मृतायो । 2 MS. कीर्तिनो ।

४३८ यत्कैलाग्र-शिलासु पुण्य-सरितां तीरेषु कुञ्जेष्वलं
पाटीराक्त[1]-समित् (fol. 36a) कुशैः सुहविषा[2] वह्नौ
समिद्धे[3] हुतम् ।
ध्यातं चापि पदाम्बुजं पुररिपोः पुण्यैरगण्यैर्मु हु-
स्तत्पाकः कमलेक्षणात यदि मामालोकते राधिका ॥२॥
वेणीदत्तस्य ॥

॥ अथ चिन्ता यथा ॥

॥ दर्शन-सन्तोषयोः प्रकारजिज्ञासा चिन्ता ॥

४३९ कथं विलोकेयममुं युवानं[1]
कुमुद्वती-बन्धुमिवोज्जिहानम् ।
भर्तुः स्वसा भाद्र-चतुर्थिकेव
कलङ्कयत्य[2]र्द्धविलोकनेऽपि ॥१॥ माधवस्य ॥

४४० क्वाहं पुनस्तां मलयस्य वल्लीं
सम्भावयिष्ये ऽर्द्धविलोकनेन ।
समन्ततः कञ्चुकि-रुद्ध-मार्गां
भर्गेन्दु-लेखामिव मौलि-वन्द्याम् ॥२॥
ग्रन्थकर्तुः ॥

---

४३८। 1 MS. पाटीरीक्त०। 2 MS. सुहविधा। 3 MS. सनिद्धे।

४३९। 1 MS. युवानां। 2 MS. लङ्कयत्य०।

॥ अथ स्मृतिः ॥

॥ प्रियाश्रित-चेष्टाद्युद्बोधित-संस्कारजन्यं ज्ञानं स्मृतिः ॥

४४१ आन्दोलनैर्मद्वपुषा लगन्तीं
स्मरामि वेणीं पुरुषायितायाः ।
समाचरन्त्याः सुरतोपदेशं
तस्याः कशावल्लिमिव प्रियायाः ॥१॥

माधवस्य ॥

४४२ साऽयोध्या स मदालयः[1] स जनक[2]स्ता मातरस्तेऽनुजा-
स्तद्राज्यं चतुरङ्गिणी-परिचितं ते ते सहायाः शुभाः ।
सर्वं विस्मृतमाः स्मृतिं पुनरहो संयाति हा जानकि
क्वासीति स्मरणातुरो रघुवरः पायादपायाज्जगत्[3] ॥२॥

वेणीदत्तस्य ॥

॥ अथ गुणकीर्तनम् ॥

॥ वियोग-समय-कान्ता-विषयक-स्तुति-प्रतिपा (fol. 36b) दनं
गुणकीर्तनम् ॥

४४३ दीपायते यन्निविडान्धकारे
भुजङ्ग-जाले गरुडायते यत् ।
छत्रायते यज्जलदाम्बु-पाते
तत् प्रेम किञ्चित् त्वयि[1] भाति तस्याः ॥१॥

माधवस्य ॥

---

४४२ । 1 MS. महालयाः । 2 MS. जमक० । 3 MS. जागत् ।

४४३ । 1 MS. किञ्चिन्नयि ।

४४४ रूपं तद्रूपमेवाधर-मधु विलसत्सद्रसः श्वास-गन्धो
गन्धः शब्दस्य शब्दः कुचयुग-कलनं स्पर्श एवाद्वितीयः।
मात्रास्तत्पञ्चमात्राः क्षिति-जल-मरुतां तेजआकाशयोः सा
तत्त्वं संभाति माराभिध-परपुरुषस्याद्वया शक्तिरेव॥२॥
वेणीदत्तस्य॥

॥ अथोद्वेगः ॥

रतिनायक-क्लेश-समुद्भूत-समस्तविषय-त्यागेच्छाज्ञानमुद्वेगः॥

४४५ वसन्त त्वं तोषं भज मनसि मोदं मनसिज
प्रमोदं यामिन्या दयित परमुच्चैः परभृत।
अमन्दं चानन्दं मलय-हृदयानन्दन-मरु-
द्भवन्ति प्राणा मे व्रजपति-वियोगाग्नि-शलभाः॥१॥
मधुसूदन-सरस्वत्याः।

४४६ कृतान्तो वसन्तो निशा-दण्ड-हस्तः
समभ्यागतोऽसौ समीरास्त्रदूतः।
प्रचण्डः फणीशोऽस्य चन्द्रः पुरस्थो
विधास्ये वयस्ये नु किं जीवनाय॥
वेणीदत्तस्य॥

॥ अथ प्रलापः ॥

॥ प्रियाश्रित-काल्पनिक-व्याहारः [1]प्रलापः॥

४४७ श्रुती[2] क्वास्ते (fol. 37a) तादृक् प्रतिपद-सुधास्पर्धि वचनं
दृशोर्द्वन्द्वा[3]मन्दां वद वदन-सौन्दर्य-लहरीम्।

४४७। 1 MS. व्यवहारः। 2 MS. श्रुते। 3 MS दशोर्द्वन्द्वा।

त्वचो वाच्याः स्पर्शो म्रदित-नवनीतातिमसृणा
रसज्ञे माधुर्यं कथय कथमस्याधरगतम् ॥१॥

मधुसूदन-स्वामिनाम् ॥

४४८ हा तात हा श्वशुर[1] हा रमणैकवीर
हा देवर प्रियतरामल-वाक्यबन्धो ।
हा धात्रि हा जननि हा सहजे वयस्ये
हा हेति दीनमवदन्मिथिलेश-पुत्री ॥२॥ वेणीदत्तस्य ॥

॥ अथोन्मादः ॥

४४९ भुजे भुजङ्ग-भ्रममावहन्ती
मुहुः पतन्ती शिथिलाङ्ग-यष्टिः ।
सखीषु विक्षेपमिहाऽऽचरन्ती
सा नर्तकीवातितरां चकाशे[1] ॥१॥

४५० चन्द्रं प्रयच्छ सखि मे चषकानुयातं
पाटीर-पङ्क-निलयां नय मे सपत्नीम् ।
मामुद्धरोद्धुरकुचे मुकुरान्तराला-
न्मग्नामिवाऽऽपदि भुजङ्ग-भुजोपगूढाम् ॥२॥

वेणीदत्तस्यैतौ ॥

॥ अथ व्याधिः ॥

॥ स्मर-समुत्थ-सन्ताप-वेदना-कार्श्यादि-दोषो व्याधिः ॥

४५१ गण्डः पाण्डुः पीतिमा वक्त्र-बिम्बे
रूक्षं गात्रं साश्रु नेत्रारविन्दम् ।

४४८ । 1 MS. स्वशुर । ४४९ । 1 MS. चकासे ।

उष्णः[1] (fol. 37b) श्वासः क्रूरदाहोऽङ्गकेषु
व्याधिः को वा सङ्गतोऽस्या न विद्मः ॥१॥

वेणीदत्तस्य ॥

॥ अथ जडता ॥

वियोग-व्यथा-मात्र-वेद्य-जीवनावस्था जडता ॥

४५२ निगद्येदं पञ्चाशुग-विशिख-सञ्चार-मथिता
गता मूर्च्छामुच्चैर्विविध[1]-विरह-व्याधि-दलिता ।
तदालीनां पश्चादजनि जडताऽङ्गे नयनयो-
र्नदी दैन्यं चित्ते वचसि किल हा हेति गदितम् ॥१॥

मधुसूदन-स्वामिनाम् ॥

४५३ जडीभूताखिल[1]तनुर्विरहार्दित-जीवना ।
हेम-यष्टिरिवाग्निस्था विभाति तरुणीवरा ॥२॥

ममैवायम् ॥

४५४ मुहुर्व्यजन-वीजितैर्बहल-चन्दनासेवितैः
सरोजदल-वेष्टनैरपि न चेष्टते सुन्दरी ।
परन्तु तव नामनि प्रियसखीभिरावेदिते
निवेदयति जीवितं श्रवण-सीम्नि रोमोद्गमः ॥३॥

शङ्कर-मिश्रस्य ॥

---

४५१ । 1 MS. उष्मः । ४५२ । 1 MS. विविध ।

४५३ । 1. MS. स्विल ।

४५४ । SRB. v. 66, p. 289, v. r. a. (मुहुर्व्यजन)-वीजनैः सरस-चन्दनासेचनैः । c. तथापि तव ।

४५५ त्व[1] द्विरूपाग्नि-सन्दीप्ता[2] नवीनार्क-शिलेव सा ।
निश्चेष्टा जीवनं धत्ते त्वन्नाम्ना शीतलान्तरा ॥४॥ ममैव ॥

॥ अथ चित्र-दर्शनम् ॥

४५६ आलिङ्गयत्यनुनयत्यवचुम्बयत्या-
(?)लोकयत्यनुमृजत्यवगूहते च ।
पार्श्वं विलोकयति मन्मथ-भावभिन्ना
शून्यान्तरा स्मरति केलि[1](fol. 38a) कृतं
समस्तम् ॥१॥

॥ अथ स्वप्न दर्शनम् ॥

४५७ आमर्द्य[1] वक्षोज-युगं निपीय
बिम्बाधरं मे कवरीं व्युदस्य ।
नीवी-समासन्नकरो निरुद्धः
स्वप्ने वयस्येऽद्य रहस्य-चेष्टः ॥ १ ॥

॥ अथ साक्षाद्दर्शनम्[1] ॥

४५८ दृष्ट्वा रामं कमलनयनं नील-जीमूत-भासं
हासोद्रेकादभजत सती जानकी सौख्यपुञ्जम् ।
चित्रं चेदं सकल-करणान्यागमन्नेत्र-युग्मं
नो वेदेयं यदिह[1] बहुशो वाच्यमाना सखीभिः ॥ १ ॥
एते वेणीदत्तानाम् ॥

---

४५५ । 1 त । 2 MS. दीना ।

४५६ । 1 MS. केलिलि० ।

४५७ । 1 MS. आर्नद्या ।

1 MS. अथ साक्षादर्शनम् । ४५८ । 1 MS. यदिद ।

४५८ अदीन-कविता-पीन-नवीन-कवि-नीरदैः ।
वेण्यां पद्याम्बु-पूर्णायां तुरीयोऽभूत्त[1] रङ्गकः ॥

इति श्रीयाज्ञिक-वंशावतंस-याज्ञिक-नीलकण्ठात्मज-
जगज्जीवन-सूनु-वेणीदत्त-विरचितायां पद्यवेण्यां
चतुर्थस्तरङ्गः प्रस्फूर्तिमगमत् ॥

---

४५८ । 1 MS. भूतः० ।

## पञ्चम-तरङ्गः

॥ (१) अथ संयोग-शृङ्गारे रतारम्भः ॥

४६० मयि प्रणय-पेशले हरति कौतुकात् कञ्चुकं
कुचौ सपदि सङ्कुचत्तनुतया तया संवृतौ ।
अथ स्पृशति सस्पृहं मदन-जीविकां नीविका-
मकारिषत[1] सुभ्रु वा कतिविधा न काकूक्तयः ॥ १ ॥

४६१ धम्मिल्लमेकेन करेण धृत्वा
परेण वक्त्राम्बुजमुन्नमय्य ।
स्मितामृतस्यन्दि निमिलिताक्षं
धन्योऽधरान्तं धयति प्रियायाः ॥ २ ॥

४६२ दरमीलित-लोचनाभिरामं
मुखमीषत्[1] स्मित-धूसराधरान्तम् ।
अवलम्ब्य कपो(fol. 38b)लयोः[2] कराभ्यां
सुकृती चुम्बति चूत्कृतैः प्रियायाः ॥ ३ ॥

४६३ मधुराधर-पल्लवं धयन्तः
कलयन्तः परिरम्भणानि यूनः(?) ।

---

४६० । 1 MS. अकारिप्सत । SSS. v. 700 SSS. 699.

४६१ । SSS. v.701.

४६२ । 1 MS. ०मीष । 2 MS. कपोपोलयोः ।

शयिता[1] निशि दुग्धफेन-[2]कल्पे

नव-तल्पे दयिता विनोदयन्ति ॥४॥

शोभा-मोहनस्यैते ॥

४६४ एकान्त-मन्दिरगतं मदनोपमेयं

तल्पोपविष्टमतुलं रतिरूप-रम्या ।

बाला चकोरनयना नयनातिथिं तं

कृत्वा नमद्वदन-पङ्कजमाननाम ॥ ५ ॥

वत्सराजस्य ॥

४६५ तल्पोपयातां[1] रतिरूप-रम्यां

धन्यो नवीनां रमणः कराभ्याम् ।

आलिङ्ग्य पल्यङ्कगतां विधाय

ताम्बूलमाधाय मुखे चुचुम्ब ॥६॥ वेणीदत्तस्य ॥

॥ (२) अथ रतम् ॥

४६६ अन्योन्यं दशनच्छदेषु दशतोरन्योन्यमालिङ्गतो-

रन्योन्यं नखरैः खरैर्विलिखतोरन्योन्यमाचुम्बतोः ।

औत्सुक्येन नवं नवं निधुवन-प्रागल्भ्यमभ्यस्यतोः

श्रान्ते पञ्चशरेऽपि न प्रणयिनोः प्राप्तोऽपकर्षं रसः ॥ १ ॥

मोहन-शोभाकस्य ॥

---

४६३। 1 MS. शयितो। 2 MS. दुग्धकेन। SSS. v. 702

४६५। 1 MS. ०पद्यातां। SSS. v. 703

४६६। SSS. v. 709

४६७ नैषा वेगं मृदुतर-तनुस्तावकीनं विसोढुं
शक्ता नैनां चपलनितरां खेदयेन्दो[1]वराचीम् ।
रत्यभ्यासं विदधत इति प्राणनाथस्य गत्वा (fol. 39a)
कर्णोपान्ते निभृत[2]-निभृतं नूपुरं शंसतीव[3] ॥ २ ॥ धूर्तस्य ॥

४६८ प्रभ्रष्टालक-वल्लि-वेल्लित-कुचं दन्तक्षताद्राधरं
त्रुट्यत्[1]कञ्चुक-बन्धनं विनिपतद्धाराच्छ-सन्मौक्तिकम् ।
स्फुटाय[2]च्चूलिकमाकुलाकुल-मुखश्वासं रणत्कङ्कणं
रक्ताव्याच्छ-नखं विचेलमतुलं यूनोर्दिदीपे रतम् ॥ ३ ॥
वेणीदत्तस्य ॥

४६९ उदञ्चन्मञ्जीर-ध्वनि-मिलित-काञ्ची-कलरवं
मिलिन्दाली-गुञ्जारव-सुभग-शिञ्जान[1]वलयम् ।

---

४६७ । 1 MS. खेदयन्दो । 2 MS. कर्णोपाते निस्वंत । 3 MS. शंससतीव । नैषा वेगं मृदुतर—SSV. v. 2107, p. 363, v. r. b. ( शक्ता ) मैनां ( चपल ) सुभृशं । c...( विदधत ) इव··· । मूर्खस्य । SP. v. 3690, p. 551, v. r. b. शस्ता...। c. रत्यभ्यासं । मूर्तस्य । SMV. v. 12, p. 278, v. r. चपल सुहृदं । PT. v, 161, p. 40, v. r. d. कर्णोपान्तं । मूर्तकवेः । SRB. v. 37, p. 319; SSS, v. 710. SA. v. 471.

४६८ । 1 MS. त्रुचत् । 2 MS. स्फुद्य । SSS. v. 711. SHV. 1288.

४६९ । 1 MS. सिञ्चान । SSS. v. 712.

गलन्मुक्तादाम-स्तन-विनिहित-स्वेदकणिकं
रतं धन्यं मन्ये चलदलकमिन्दीवरदृशः ॥ ४ ॥

रामचन्द्र-भट्टानाम् ॥

॥ (३) अथ विपरीतम् ॥

४७० मुक्ताः[1] पतन्ति भूमौ वाला: कलयन्ति केवलं मुक्तिम् ।
चुम्बत्यम्बरमवनिं विपरीते किं[2] न विपरीतम् ॥ १ ॥

कङ्कण-कवेः ॥

४७१ विहायसि विहारिणी भवतु नाम सौदामिनी
सुमेरु-शिखरादधः पततु नाम[1] मन्दाकिनी ।
इदं तु महदद्भुतं[2] यदयमेत्य भूमीतलं
नमन्नम्रतदीधितिः कमल-सारमाकर्षति ॥ २ ॥

मधुसूदन-स्वामिनाम् ॥

४७२ किं क्लान्तासि[1] परोपहासिनि कुतो[2] भूयः श्वसिस्युत्[3] त्वरणं
किं बध्नासि न नीविकामिति मया मन्दस्मितं जल्पिते ।
मा किञ्चिद् वद वीत-ल(fol. 39b)ज्ज परतो याहीति कोपादिव
प्रत्युक्तं पुरुषायितान्त-समये तन्व्या न विस्मर्यते ॥ ३ ॥

मोहन-शोभाकस्य ॥

४७३ मेरु-द्वन्द्वमवाप्य खं निपतितो नक्षत्रलोकः शशी-
भानुभ्यामवताडितो नवघन[1] स्तारततिं[2] वर्षति ।

---

४७० । 1 MS. मुक्ता । SSS. v. 732.

४७१ । 1 MS. नीम । 2 MS. महदद्भुतं ।

४७२ । 1 MS. कानासि । 2 MS. कुचो । 3 MS. स्वसतुः० ।

विद्युत्ताण्डवमातनोति कदलीकाण्ड-द्वयं वेपते
ह्यत्पाते सति योषितः पुरुषता नैतद्धिचित्रायते ॥ ४ ॥

अनन्त-भ्रातुः ॥

४७४ चन्द्रश्चुम्बति पङ्कजं नवघनस्तारा[1]-ततिं वर्षति
प्रोन्मादं च रथाङ्कको व्रजति सम्मोहं च शम्पाऽञ्चति ।
रम्भा स्फूर्जथुमातनोति मधुरं हंसीगणः कूजति
स्रष्टुः सर्गमहो तनोति मदनो व्यस्तार्थमत्यर्थतः ॥ ५ ॥

वेणीदत्तानाम् ॥

॥ (४) अथ रतावसानम् ॥

४७५ नाधराद्विगलिताऽधरपाली
नो बभूव शिथिलो भुजबन्धः ।
कुन्तलादपससार न पाणिः
कामकेलि-विरतावपि यूनोः ॥ १ ॥ मैथिलस्य ॥

४७६ चाञ्चल्यं न तवास्ति लोचनयुगे लुप्तो गिरां चण्डिमा
नीरागो रदनच्छदो विलुलिता चित्रा च पत्रावलिः ।
कस्यैतत्तरुणस्य हन्त तपसा साफल्यमासादितं
येनैषा गज-गञ्जितेव नलिनी तन्वित्वमुत्ताम्यसि[1] ॥ २ ॥

मोहन-ओभा(fol. 40a)कस्य ॥

---

४७३ । 1 MS. नवदन० । 2 MS. ०तत्तिं । SSS. v. 735.

४७४ । 1 MS. ०तारां । SSS. v. 746.

४७५ । SSS. v. 747

४७६ । 1 MS. ०मुत्ताम्यसि । SSS. v. 748.

४७७ काम-सङ्गर-विधौ मृगीदृशः
प्रौढ-पेषणधरे पयोधरे ।
स्वेदराजिरुदियाय सर्वतः
पुष्पवृष्टिरिव पुष्पधन्वनः[1] ॥ ३ ॥ भानुकरस्य[2] ॥

४७८ स्तनान्तरे राजति रोमराजि-
लग्नो नखाङ्कः कुटिलस्तरुण्याः ।
समुन्नमद्यौवन-कुम्भिकुम्भ-
मध्यावलग्नाङ्कुश-दण्डलक्ष्मीः ॥४॥ माधवस्य ॥

४७९ मुकुलित-नयना समुच्छ्वसन्ती[1]
शिथिलित-गात्रलताऽस्त-हावभावा ।
विगलित-सकलाङ्ग-चारुभूषा
मृदित-लतेव विभाति भामिनीयम् ॥ ५ ॥

४८० नीवीं निगृह्यैक-करेण तन्वी
परेण तल्पान्तरमाकलय्य ।
धम्मिल्ल-संवेल्लित-चूचुकाग्रा
समुद्वजन्ती शय[1]नाच्चकाशे[2] ॥ ६ ॥ ममैवैतौ ॥

---

४७७ । 1 MS. पुष्पधन्वतः । 2 MS. भानुस्करस्य ।
४७८ । SSS. v. 749.
४७९ । 1 MS; सुमुच्छ्वसती । SSS. v. 750.
४८० । 1 MS. शया० । 2 MS. चकासे ।

॥ (५) अथ मानिनी ॥

४८१ योऽन्यत्र कोपो रसिकैः स एव
प्रियाकृतौ मान इति प्रतीतः ।
यः[1] चार-केदार-महीषु काश्यः
स संस्कृत-क्षेत्रभवो महेक्षुः ॥ १ ॥ माधवस्य ॥

४८२ व्यञ्जन-स्वर-समान-संज्ञका
कान्त-वर्ण-पदशब्द-साधना ।
सन्धिवृत्तिरिव कृष्णकामिनी
यामिनीमपि निनाय मानतः ॥ २ ॥

४८३ नीरागोऽप्यधरो निरञ्जन-पदं प्राप्तञ्च नेत्रद्वयं
वक्त्रं मीलित-लोचनं पदयुगं पद्मासनं ते प्रिये ।
मुक्तोऽयं चिकुरः(fol. 40b) कुचद्वयमगात्त्रुटयत्[1] सदाहारतां
सर्वाङ्गं वर-योगिभावमगमन्म्लानं[2] कथं मानसम् ॥ ३ ॥
कविराजस्यैती ॥

४८४ लता-मूले लीनो[1] हरिण-परिहीनो हिमकर-
स्खलन्मुक्ताकारा गलति जलधारा[2] कुवलयात् ।
धुनोति[3] वन्धूकं तिलकुसुम-जन्मापि पवनो
गृहद्वारि पुण्यं परिणमति कस्यापि कृतिनः[4] ॥ ४ ॥
षाण्मासिकस्य[5] ॥

---

४८१ । 1 MS. य ।
४८३ । 1 MS. त्रुयत् । 2 MS. लानं ।
४८४ । 1 MS. तीनो । 2 MS. ०धाराः । 3. MS. मधुणोति ।
4 MS. प्रकृतिनः । 5 MS. षाड्मासिकस्य । PT. v. 167, p. 41,

४८५ छिन्नेव कापि लतिकाऽश्रुकवीतगुच्छा
तुच्छाच्छ-पर्ण-परिवेल्लित-चन्द्रबिम्बा ।
मान-प्रचण्ड-भुजगाकलितान्तराला
हालाहलं वितनुते श्वसनेन सार्द्धम् ॥ ५ ॥

ममैव ॥

४८६ कलानाथः कामं भजति बहुदोषाङ्कित-तनुं
कुमुद्वत्यास्त[1]स्मिन्नपिभवति किं नाम[2] न रुचिः ।
न पद्मिन्या मोदः किमु समुदयतुग्रष्णा[3]महसि
प्रिये प्रायो दोषान्न गणयति चित्तं मृगदृशः ॥ ६ ॥

मधुसूदन-स्वामिनाम् ॥

॥ (६) अथ प्रभातानुनयः ॥

४८७ मानं मानिनि मुञ्च मानसभुवः[1] साम्राज्यमुज्जृम्भतां
हाहा गच्छति यामिनी न समयो यातः पुनः प्राप्यते ।
अत्यल्पागसि कल्पिताधिक-भये कान्ते पदान्तानते
कोऽयं कोकिल-वाणि केलि-समये कोपस्त्वयाऽलङ्कृतः ॥ १ ॥

---

v. r. c...जन्मापि···। SRB. v. 29, p. 275, v. r. a. हिमकरः। SA. 762. AK. v. 277, v. r. b. स्फुरत्ताराकारा पतति...। d. वहिर्द्वारि···। SHV. v. 1964.

४८६। 1 MS. कुमुद्वत्यातस्त० । 2 MS. किं नाम । 3 MS. तुग्ष्क० ।

४८७। 1 MS. मानसभुवं । SRB. v. 17, p, 308, v. r. d···कोपस्त्वयालम्बितः ।

४८८ भावं भजस्व भव (fol. 41a) भामिनि सुप्रसन्ना
मा यामिनीं गमय गौरि दुराग्रहेण ।
कोपः कुरङ्ग-नयने किल कामिनीनां
प्राणेश-पाद-पतनावधिरेव रम्यः ॥ २ ॥

मोहन-ओझाकस्य ।

४८९ वपुर्वल्ली राधे तिरयति शिरीषस्य मृदुतां
ततः किं ब्रूमस्ते हृदय-कमलं कोमलमिति ।
अतः शङ्के पङ्केरुहमुखि स मानस्त्वयि कथं
न दम्भो दम्भोलेरपि भवति कान्तस्य[1] दलने ॥३॥

मधुसूदन-स्वामिनाम् ॥

४९० गतप्राया रात्रिः शशिमुखि शशी शीर्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत[1] इव ।
प्रणामान्तो मानस्तदपि वहसि त्वं क्रुधमहो[2]
कुच-प्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥ ४ ॥

---

४८९ । 1 MS. कस्तस्य । SSV. v. 1612, p. 373, v. r. a...

४९० । 1 MS. पूर्णात इव । 2 MS. क्रुधमहो । रात्रिः कृशतनु शशी सीदत इव । c...मानस्त्यजसि न तथापि । वाणभट्टस्य । SP. v. 3713, p. 556, v. r. c...( मानस्तदपि ) न जहासि...। SMV. v. 3, p. 284, v. r. same as in SSV. KVS. v. 367, p. 113, v. r. c...same as in SSV. ( महोदधेः )। SR. v. 1, P. 350, v. r. as in SRB. SA. 488.

४८१ तमो विगलिताऽखिला न च कृतः प्रसादस्त्वया
व्रजामि हतको[1]ऽधुना प्रणतिरन्तिमेयं[2] मम ।
इति त्वरितमुत्थिते वितथमेव गन्तुं प्रिये
कथञ्चन विलोकितं जयति साचि वामभ्रु वः[3] ॥ ५ ॥

जगज्जीवनस्य ॥

४८२ गच्छत्येव निशा-सखी निपतितः प्राणेश्वरः पादयोः
कालो याति मनोरमः पुनरयं चन्द्रः परां चुम्बति ।
प्राची भानुरुचिश्चकास्ति नलिनी हासोन्मुखी मानिनो-
त्येवं सा गदिता जहास म(fol. 41b)धुरं मत्तापि
मानालिना ॥ ६ ॥ वेणीदत्तानाम् ॥

॥ (७) अथ चन्द्रास्तम् ॥

४८३ धूलि[1]धूसर-तनु[2]दुरति-क्रमाऽ-
तिक्रमादिय[3]मनन्त-वर्त्मनः ।
मन्दगाध्वग-तनोः समानता-
मानताऽभजत मूर्तिरैन्दवी[4] ॥ १ ॥

दामोदरस्य ॥

४८४ अस्तमीयुषि निशाकरे सता
रागतोऽतिविधुरा कुमुद्वती ।
षट्पदं गरलमग्रहीन्मुखे
सम्मुखेऽपि खगशब्द-वारिता ॥२॥ वेणीदत्तस्य ॥

---

४८१ । 1 MS. हस्तको० । 2 MS. अन्तिमेयं । 3 MS. ध्रुव ।
४८३ । 1 MS. धूति । 2 MS. तुनु । 3 MS. दित्य । 4 MS. ०रन्दवी ।

४९५ आभुज्येन्द्र-दिशं कुबेर-ककुभं स्वाश्लिष्य गाढं करै-
राचुम्ब्याब्ज्-जिनीं[1] समं कुमुदिनीमुल्लास्य तां दक्षिणाम् ।
एषोऽद्यापि पराङ्मुखो विजयते रात्रीश्वरो द्रागिति
क्रोधादेव लयं जगाम चतुर[2]स्तारागण:[3] सर्वत: ॥ ३ ॥

४९६ गलित-कर-समूह: पाण्डुरीभूत-देह:
सकल-विरहिणीनां याति शापैरिवास्तम् ।
विरह-विधुर-कोक-प्रेयसी-लोक-शापाद्
हृदि-कलित[1]-कलङ्क-स्तानिरेख: पुरैव ॥ ४ ॥
वेणीदत्तस्यैतौ ॥

४९७ वैरिण: करगतास्मि पद्मिनी
पद्मिनी हसति चन्द्र यासि किम् ।
रोदितीति मधुप-स्वनैरसौ
नोरसौरघटिता(?) कुमुद्वती ॥ ५ ॥

४९८ का का प्रिया प्रियतमं परिरभ्य दोर्भ्या-
मभ्यागतेऽपि मिहिरे न जहाति निद्राम् ।
जागर्तु सज्जयतु चोल(fol. 42b)मितीव का-का[:]
काकालिरालिरिव गूढगिरस्चकार ॥ ६ ॥
उद्दाम-कवे: ॥

---

४९५ । 1 MS. जिनी । 2 MS. चतुरा । 3 MS. तारागण: ।
४९६ । 1 MS. कलित हृदि ।

॥ (८) अथ प्रभातम् ॥

४९९ हस्तादपास्तापि मुहुर्मुरारे-
गुणानुविद्धा कर-चक्रिकेव ।
समागता सम्प्रति नोपयाति
वैगुण्यतः सा विमुखी विशेषात् ॥ १ ॥

माधवस्य ॥

५०० रत्नाढ्य[1]-जाम्बूनद-हंसकोद्य-
न्निनाद-चञ्चच्चरणारविन्दा ।
स्मेरा नतास्या विलसत्कटाक्षा
दृष्टाऽद्य सुभ्रूरवगुण्ठ्य यान्ती ॥२॥ अयमपि ॥

५०१ आलोक्य पाणी सुविमृज्य नेत्रे
तल्पात् समुत्थाय विधाय भूषाम् ।
आचम्य कान्तं परिधाय वासो
यान्ती सलज्जा हृदयं दुनोति ॥ ३ ॥ ममैव ॥

॥ (९) अथ प्रभात-वायुः ॥

५०२ वासो विधूय स्तनयोर्विपुष्पां
कपोल-लोलां कवरीं व्यदस्य ।
अवारितः प्रोञ्छति वारिधारां
मुखे मृगाक्ष्याः सुकृती समीरः ॥१॥ कस्यापि ॥

---

५०० । 1 MS. रत्नाद्य ।

५०२ । SSS. v. 22

५०३ परिमल-बहलां सुपल्लवाङ्गीं
कुसुमयुतां परिरभ्य हेमवल्लीम् ।
विरचित-सरसी-सुमज्जनोऽसौ
रसिक इवैति शनैः शनैः समीरः ॥२॥ गौर्याः ।

५०४ निशा-कुमुदिनी-सङ्क्रीडनाश्लिष्टसल्लतः ।
मन्दमायाति पवनः कामीव सुरतार्थितः ॥३॥ (fol, 42b)
वेणीदत्तस्य ॥

॥ (१०) अथ प्रभातवेला-सन्ध्या ॥

५०५ इतः शुक्ला चन्द्रद्युतिभिरिह रक्ताऽरुणकरै-
स्तमिस्रै रप्यन्तः स्खलित-गतिभिर्मेचक-रुचिः ।
प्रभातश्रीरेषा विलसति पुरस्था सुकृतिनां
मिमङ्क्षूणां जह्नु-द्युमणि-विधिजा-सङ्गम इव ॥
॥ १ ॥ कृष्णपण्डितानाम् ॥

५०६ प्रभातवेला स्मरराजपुत्री
नीराजना-भाजनमर्कबिम्बम् ।
आयाति नीराजितुमब्धिपुत्रीं
पाणौ गृहीत्वाऽङ्कुरितांशुमालम् ॥ २ ॥
पद्मावत्याः ॥

---

५०३ । Sanskrit Poetesses, Part A, 2nd. edition, v. 31, p. 13 ; SSS, v. 28.

५०५ । SSS. v. 33.

५०६ । Sanskrit Poetesses, Part A, 2nd edition, v, 64, p. 28.

५०७ व्योमाम्बरा लोकरुचिं वहन्ती
मुखारुणा सिद्धसमूह-वन्द्या ।
नभोमणिं व्याकुरुते प्रभाते
निशा तमस्त्रोरितमादरेण ॥ ३ ॥

॥ (११) अथ सूर्योदयादि-कालः ॥

५०८ पुरुहूत[1] दिगङ्गना प्रसूतं
रविमुद्दाम-सुतं चिरादिवेति ।
अलिनो नलिनोदरादिमुक्ताः
प्रियबाहु-द्वय-बन्धनान्नवोढाः ॥ १ ॥ कस्यापि ॥

५०९ नायमुष्णगुरुदञ्चति किन्तु
व्योमदेहोपरि-गवाक्ष-शिरस्थम् ।
ध्वान्तमान्तरमपासितुमित-
च्छित्र-काच-परिणाहि-पिधानम् ॥ २ ॥
चिन्तामणि-दीक्षितानाम् ॥

५१० निशामशेषामुपभुज्य वारुणीं
प्राचीमुपेत्याथ तयाऽवधीरितः ।

---

५०८। 1 MS. पुराहूत। SSV. v. 2220, p. 384; SR. v. 3, p. 168, v. r. a...( दिगङ्गना ) प्रसूता। b...चिरादुपेतम्। c...नलिनीदलाद्विमुक्ताः। SSS. v. 40. SHV. v. 1400. SA. v. 518.

५१०। SSS. v. 45.

तदङ्घ्रि-लाक्षारुण-रञ्जिताङ्गको
मन्दं विनिर्याति तदङ्गनाद् रविः ॥ ३ ॥
कृ(fol. 43a)ष्ण-पण्डितस्य ॥

५११ एकीकृत्य किमोषधी[1]पतिरसैराकाश-भाण्डोदरे
फुल्लत्पङ्कजिनी-जनाम्बुज-मुख[2]ध्मातैः समन्तान्मुहुः ।
काष्ठोत्थारुण-दीप्ति[3]वह्नि-पटलैराताप्य सम्यग् स्फुटं
तारा-पारद-मारणं वितनुते[4] वैद्योऽनवद्यो रविः ॥ ४ ॥
विश्वम्भर-भट्टस्य[5] ॥

५१२ पद्मिनी-सरसिजाननादगा-
न्नाद-गान-मुखराऽलिमालिका ।
उत्थितेव खलु धूम-कालिका
कालिका-व्ययित-वैरहानलात् ॥ ५ ॥

५१३ मण्डितं कतिपयैश्च भा-नवै-
र्भानवैर्हरिहरिन्मुखं करैः ।
केशरस्य किल कर्णपूरकैः
पूरकैरिव मनोरमच्छवेः ॥ ६ ॥ दामोदरस्यैतौ ॥

५१४ ताराः पारदगोलिका इह नभःकाचोच्च-कुप्यां चणं
न्यस्ताः संहतिमित्य सौरकिरणैश्चन्द्रभ्रमं कुर्वते ।

---

५११। 1 MS. किमोषधि० । 2 MS. ०म्बुमुख० । 3 MS. दीप्तिः । 4 MS. चितनुते । 5 MS. विश्वंभटभ्पट्टस्य । SSS. v. 46

अप्येताः सकलां निशां[1] परिपतद्दीपालि-पाकक्रमात्
प्रातः सिद्धरसात्मना परिणमन्त्यादित्य-बिम्बच्छलात् ॥ ७ ॥
कृष्ण-पण्डितस्य ॥

५१५ छाया वियोगि-वनितेव[1] गता कृशत्वं
तप्तं पयः पिशुन-मानसवद्बभूव ।
केनाधुना वद मनागवलोकनीयः
क्व डोत्तमर्ण-मुख-मण्डलवत् पतङ्गः ॥ ८ ॥
बालाजी-भट्टानाम् ॥

५१६ अस्वाध्यायः[1] पि(fol. 43b) कानां मदनमख-समारम्भण-
स्याधिमासो
निद्राया जन्मलग्नं किमपि मधुलिहां कोऽपि दुर्भिक्ष-कालः ।
वृष्टिर्यात्रोत्सुकानां मलयज-मरुतां पान्थकान्ता-कृतान्तः
प्रालेयोन्मूल-मूलं समजनि समयः कश्चिदौत्पातिकोऽयम् ॥
॥ ९ ॥ वाहिनीपतेः ॥

५१७ रविर्यदन्तःपुरसुन्दरीणां
दासीजनानां मुखपङ्कजानि ।
विलोकितुं स्थापितसद्रथोऽयं
मध्यन्दिनेऽद्यापि विलम्बमेति ॥१०॥ वेणीदत्तस्य ॥

---

५१४। 1 MS. निशं। SSS. v. 32.
५१५। 1 MS. वियोगविनितेव। SSS. v. 58.
५१६। 1 MS. आस्वाध्यायः। SSS. v. 57. SA. v. 526.

५१८ व्याघ्री-पार्श्वमुपैति रङ्कु-तनयः सर्पोऽन्तरं[1] बर्हिणो
मत्स्यो मीनरिपोश्च पक्षतिमलं चण्डातपे[2] भूतले।
सत्रासं नव[3]नीतकल्पमतनुर्वक्षोज[4]मेणीदृश-
श्छायां भूमिरुहो हरिर्गिरिदरीं कामी च कान्तालताम्॥११॥
गौर्याः॥

५१९ बर्हैर्वातं रचयति शिखी वल्लभायाः शरीरे
क्रोडे रङ्कोर्विशति हरिणी शृङ्गकण्डूयिताङ्गी।
कोकी कोकं श्रयति नलिनी-पत्रमध्यान्तरस्थं
हंसश्चञ्चा धरयति दलच्छत्रमङ्गे प्रियायाः॥ १२॥
रामचन्द्रागमिनः॥

॥ (१२) अथ पुष्पावचयः॥

५२० एहि तत्र चिनुवः सुकौ सुमं
को सुमञ्जु सुमनस्तरु-श्रियाम्।
एकिकामिति ततान मानिनी-
माननीय कपटाद्रहः क्षणम्॥ १॥

५२१ पी(fol. 44a)डितैक-कुचमेकिकाऽच्युतं
काचुरतं कुसुममाशु बिभ्रती।
एकबाहु-कृतकण्ठ-लम्बना-
लम्बनानि परिरभ्य चाचरत्॥ २॥

---

५१८। 1 MS. सर्पोऽन्तर। 2 MS. चण्डातपो। 3 MS. शैत्यात् सनव। 4 MS. ०मतनुवक्षोज०।

५२२ पुष्पदाम-परिधापना-मिषान्-
ना मिषादरिषु सञ्चितोरसि ।
द्राक् सखी-पुरत एव सस्वजे
स स्वजि वितनुतः कयाचन ॥ ३ ॥
दामोदर-भट्टानामिति ॥

५२३ दूरादापतिता स्फुरत्सरसिज-भ्रान्त्या द्विरेफावली
कान्तानां वदनेषु सीधुभिरभिष्यन्त[1] स्मितोल्लासिषु ।
आच्छिन्नापि ततः करैर्नवदल-प्रख्यै र्लता-विभ्रमा-
द्वक्षोज-द्वयमच्छगुच्छ-रुचिरं मुग्धा मुहुर्धावति ॥ ४ ॥
रामचन्द्रागमिनः ॥

५२४ तुङ्ग-स्तनस्तवक-चुम्बित-वल्लकीभि-
रुल्लोलनील-ललितालक-वल्लरीभिः ।
एताभिरुन्नत-पयोधर-मन्थराभि-
रुद्भ्राम्यते कर-सरोजगतं सरोजम् ॥ ५ ॥
सदाशिवस्य ॥

५२५ प्रसूनं दधाना करे पञ्चवर्णं
सुवर्णद्युतिः कर्णिका-कर्णपूरा ।
जगन्मोहिनी कामवाणेश्वरी च
व्यतर्कि स्फुरन्ती वने पद्मपादा ॥ ६ ॥

---

५२३ । 1 MS. सीधुरभिष्यन्तः । SSS. v. 89.

५२४ । SSS. v. 90.

५२६ केयं लता कमल-कोमल-कोमगौरी
मल्ली-प्रसूनमिलिताऽ[1]मलबन्धुजीवा ।
रागारुणाम्बुजदला बदरीफलाढ्या
संवीक्षिताऽमृतरसानुभवं ददाति ॥ ७ ॥
वेणीदत्तस्यैतौ ॥

॥ (१३) अथ कन्दु(fol. 44b)क-क्रीडा ॥

५२७ [1]भ्रमच्चरणपल्लव-क्वणदमन्द-मञ्जीरकं
परिस्खलदुरोरुह-स्तवक-कम्पमानांशुकम् ।
रणत्कनक-मेखलं करसरोरुहाभ्यां पुरः
पतन्तमपरादरे कुसुम-कन्दुकं सुन्दरी ॥ १ ॥

५२८ सानन्द-कन्दुक-विहारविधौ वधूनां
दोलायमान-मणिकङ्कण-निक्वणेन[1] ।
उच्चाटितेषु युवचित्त-विहङ्गमेषु
श्येना इव स्मृतिभुवो विशिखा निपेतुः ॥ २ ॥
गणपतेरेतौ ॥

५२९ एकोऽपि त्रय इव भाति कन्दुकोऽयं
कामिन्याः करतल-राग-रक्तरक्तः ।

---

५२६ । 1 MS. मितिता । SSS. v. 91.
५२७ । 1 MS. रणाच्चरणा० । SSS. v. 93.
५२८ । 1 MS. निद्वारणान । SSS. v. 94.

भूमौ-तच्चरण-नखांशु-गौरगौरः
खस्थः सन्नयन-मरीचि-नीलनीलः ॥ ३ ॥

५३० विदितं ननु कन्दुक ते हृदयं
वनिताधर[1]-सङ्गम-लुब्धमिव[2] ।
वनिता[3]-कर-तामरसाभिहतः
पतितः पतितः पुनरुत्पतसि ॥ ४ ॥

कालिदासस्यैतौ ॥

५३१ यतो यतो धावति कन्दुकोऽयं
ततस्ततो धावति दृङ् मृगाच्याः ।
उन्मूल्य नालान्मरुता प्रणीता
व्योम्नप्रवृजापङ्क्तिरिवालि-लीना ॥ ५ ॥

रामजितः ॥

५३२ धन्योऽसि कन्दुक गुणौघ-निधानरागिन्
यत् कामिनी-करतलैरतिताडितोऽपि ।
उत्पत्य तन्मुखविधुं परिचुम्ब्य भूयो
वक्षोजमाश्लिषसि सर्व-सुखैकसारम् ॥ ६ ॥

ममैव ॥

---

५२९ । SMV. v. 8, p. 214, v. r. a···कन्दुकसौ । b. कान्तायाः । d. सस्त ( खस्थ ? ) स्तन्नयन··· । SSS. v. 96.

५३० । 1 MS. कान्ताधर० । 2 MS. लुब्ध इव । 3 MS कान्ता० । SSS. v. 97 ; SA. v. 174.

५३२ । SSS. v. 95.

॥ (१४) अथ हिन्दोल-क्रीडा ॥

५३३ हिन्दोलान्दोल-लोलत्-कुचकलश-वलच्चोल-चञ्चत्[1]कपोल-
(fol. 45a)

व्यालोल-स्वर्णकर्णाभरण-परिणमच्चारु-सूत्रामचापा:[2] ।
आन्दोलद्बाहुवल्ली-विचलित-वलया गीति-नीति-प्रवीणा
वीणानिक्वाण-निर्जित्वर-मधुररवा: काम-सामोद्गिरन्ति ॥ १ ॥

५३४ उन्नम्य दूरं मुहुरानमन्त्य:
कान्ता: स्फुटीभूत-नितम्बबिम्बा:[1] ।
दोला-विलासेन जितश्रमत्वात्
प्रकर्षमापु: पुरुषायितेषु ॥ २ ॥ विह्लणस्य ॥

५३५ केशैरुन्नमिताम्बुदं स्मितकरैर्ज्योत्स्नान्वितं वीचितै-
र्भङ्गाली-ललितं पयोधरतटाघातोच्छलन्मौक्तिकै: ।
ताराराजि-विराजितं मुखरुचा चन्द्रावदातं नभ-
स्तन्वत्या[1] ननु कोऽप्ययं विजयते दोलारस: सुभ्रुव: ॥ ३ ॥
रामचन्द्रागमिन: ॥

५३६ स्निग्धेन्द्रनील-मणिदाम-समानसूत्र-
हिन्दोलिकावलय-लोल-शरीरयष्टि: ।

---

५३३ । SSS. v. 108. Sp. v. 3879, p. 588 ; SSS. v. 106.
1 MS. कुचशयलच्चोचञ्चत्० । 2 MS. चानु । सुलास चाया: ।
५३४ । 1 MS. बिम्ब ।
५३५ । 1 MS. तन्वन्त्या । SSS. v. 109.
५३६ । SSS. v. 110.

एषाऽभिनन्दयति मां द्विरदेन्द्र-शुण्डा-
पर्याकुला कनक-चम्पक-मालिकेव ॥ ४ ॥
सदाशिवस्य ॥

५३७ इमा हिन्दोलासु भ्रमितमहसः कुङ्कुमरुचा[1]
त्रपारूपाकारास्तरलतरहाराश्चलदृशः ।
उदञ्चत्काञ्चीनां बहलतर-घोषैर्मनसिज-
त्रिलोकी-सम्राजो दधति जयघण्टालि-निनदम् ॥ ५ ॥
मधसूदन-स्वामिनाम् ॥

५३८ आन्दोलयन्ती वपुरायताक्षी (fol. 45b )
हिन्दोलिकायां कनकाङ्ग-यष्टिः ।
अतर्कि लोकैर्गगनान्तरस्था
स्वर्देवतेवाखिल-रूपरम्या ॥ ६ ॥ वेणीदत्तस्य ॥

॥ (१५) अथ भ्रमरी-क्रीडा ॥

५३९ मुक्ते काञ्चन-कुण्डले निपतिते माणिक्य-भूषाभरे
कीर्णे केलि-सरोरुहे विगलिते मुक्ताकलापे सति ।
निश्वस्या[1]म्बुज-लोचना भ्रमरिका-नृत्यावसाने पुनः
प्राणेश-च्युति-[2]शङ्कयेव हृदये हस्तारविन्दं ददौ ॥ १ ॥

---

५३७ । 1 MS. रुढां । SSS. v. 111.

५३९ । 1 MS. निश्वस्या० । 2 MS. च्युत । SSS. v. 112.

५४० अलक्षित-कुचाभोगं भ्रमन्ती नृत्यभूमिषु ।
स्मरेणापि सरोजाक्षी न लक्ष्यीक्रियते शरैः ॥ २ ॥

एतौ गणपतेः ॥

५४१ उत्पतन्ती भ्रमन्ती सा नमन्ती नलिनेक्षणा ।
शम्पाशतं वितन्वाना भ्रमरीव भ्रमं व्यधात् ॥ ३ ॥

वेणीदत्तस्य ॥

॥ (१६) अथ जल-क्रीडा ॥

५४२ कूलेऽनुकूले वसनं निधाय
पिधाय वक्षः करपल्लवेन ।
विदिक्षु दिक्षु प्रविधाय चक्षु-
र्नीरे नताङ्गी द्रुतमाविवेश ॥ १ ॥ ममैव ॥

५४३ अंशेन कर्णं चिबुकेन वक्षः
करद्वयेनाक्षि तिरोदधानाम् ।
संताडयामास हरिः समेत्य
चकोरनेत्रा चषकोदकेन ॥ २ ॥

---

५४० । 1 MS. सारे० । SSS. v. 113 SA. v. 173.
५४१ । 1 MS. भ्रामरीव । SSS. v. 114.
५४२ । SSS. v. 71.
५४३ । SSS. v. 66.

५४४ निरीक्ष्य[1] वेणी-प्रतिबिम्बमेणी-
दृशो भुजङ्ग-भ्रममावहन्त्यः ।
पतद्दुकूलं धृत-बाहुमूलं
कूलं प्रकम्प्याकुलिताः[2] प्रचेलुः ॥३॥ एतौ गणपतेः ॥

५४५ जानुदघ्नकमुपेत्य वारि तद्
वारित-प्रबलभीः(fol. 46a) पुरोगमा[1] ।
काचनाऽऽशु सहसा न्यवर्तता-
वर्ततामथ समीक्ष्य भीरुका ॥ ४ ॥

५४६ धर्तु कामममभिवीक्ष्य नीरतो-
नीरतोत्ततनु[1]मात्मभीस्तटात् ।
काचनाऽऽत्वपससार दूरतो
दूरतो नहि नहीति-भाषिणी ॥५॥
दामोदरस्यैतौ ॥

५४७ मुञ्चद्धारं चिकुर-निकरं बिभ्रती पाणिगर्भे
गात्राश्लिष्ट-स्तिमित-वसना स्पष्टसर्वाङ्ग-शोभा ।
स्नानोत्तीर्णा कमलनयना तिर्यगावर्जितास्या
नो वा कस्यासमशर-समाक्रान्तमन्तश्चकार ॥६॥
मोहन-ओझाकस्य ॥

---

५४४ । निरीक्ष्य । 3 MS. ०कुलिता । SSS. v. 68.

५४५ । 1 MS. ०गमाः ।

५४७ । 1 MS. मनु० । ५४७ । SSS. v. 81.

५४८ स्नानोत्तीर्णा विशदवसना कज्जलेनाञ्जयन्ती
नेत्रे दन्तीश्वरगतिरतिप्रेमपात्रीबभूव ।
धिग्दैवं तामहमकरवं किन्तु देहे पटीरं
कण्ठे हीरं शिरसि कुसुमं नेत्रयोरञ्जनानि ॥ ७ ॥

५४९ विनिःसरन्ती रति-जित्वराङ्गी
नीरात् सरागाम्बुज-लोचनश्रीः ।
आलोकि लोकैः स्वरुचा स्फुरन्ती
जलाधिदेवीव जलेश-वन्द्या ॥ ८ ॥ गौर्याः ॥

॥ (१७) अथ सूर्यास्तम् ॥

५५० आगत्य सत्वरममी रविरम्बरान्त-
मुल्लास्य पाद-पतनैः स्फुट-सान्ध्यरागः ।
पश्य प्रसादयति रागवतीं प्रतीची[1]-
दिक्कामिनीं प्रकुपितामिव मन्यमानः ॥ १ ॥
रामचन्द्रागमिनः ॥

५५१ कृत्वा प्रबुद्ध-कमलामखिलां त्रिलोकी-
मम्भोनिधेर्विश (fol. 46b)ति[1] गर्भमसाविदानीम् ।
अन्त-प्रसुप्त[2]-हरिनाभि-सरोजबोध-
कौतूहलीव भगवानरविन्दबन्धुः ॥ २ ॥ जयदेवस्य ॥

---

५४९ । SSS. 79. See Sanskrit Poeteses, Part A. 2nd edition, v. 24, p. 11.

५५० । 1 MS. प्रतीची । SSS. v. 124.

५५१ । 1 MS. विशति । 2 MS. प्रसुप्त० । SSS. v. 127.

५५२ परित्यज्य प्राचीमतिरुचिकरीमात्मदयितां
प्रसक्तौ वारुण्यां गणयति तमो भाव्यपि न यः ।
वसुत्यागं मान्द्यं नत-वदनतां दर्शन-वह्निः-
क्षतत्वं रागित्वं स [ च ] रविरगात्यक्तदुचितम् ॥ ३ ॥
रामजितः ॥

५५३ अस्तं यतापि किल मस्तकवर्तिनाऽसा-
वस्ताचलोऽह्निमरुचा रुचिमप्यलम्भि ।
प्रायः परोपकृतये कृतिनोऽनपेक्ष्य
स्वार्थं विपत्[1]-कवलिता अपि भावयन्ति ॥ ४ ॥

५५४ निर्मज्याधिपयोधि भर्तरि रुचां लोकान्तरं प्रस्थिते
सन्ध्याग्निं विशति प्रमीलति निजेऽम्भोजे दिनश्रीरियम् ।
यत्काष्ठाकर एष[1] रज्यति तमस्तोमोऽश्नुते रोदसी
संक्रन्दन्ति खगाः समेत्य ददते विप्राश्च तोयाञ्जलीन् ॥ ५ ॥
कृष्णपण्डितस्यैतौ ॥

५५५ स्वं विकीर्णमुदये सवितारं
तेजसां वसुचयं सवितारम् ।
संहरन् वणिगिवेह तमक्का-
य प्रयाति च यतो गतमक्का ॥ ६ ॥

---

५५२ । SSS. v. 130.
५५३ । 1 MS. विवत् । SSS. v. 128.
५५४ । 1 MS. एप । SSS. v. 129.

५५६ वारुणीं दिशमपेत-विहङ्गां
वीक्ष्य भीश्य इव वीतविहङ्गाः ।
दिग्भ्य आययुरमन्द-रवन्तः
स्व-स्व-नीडतरुमादरवन्तः ॥ ७ ॥
दामोदर-भट्टस्यैतौ ॥

५५७ अस्तोदया(fol. 47a)द्रि-गतमर्क-शशाङ्कबिम्ब-
मङ्कोऽतिवार्द्धक-दशामवलम्बितस्य ।
ताराक्षराणि पठितुं तपनीय-शैल-
नासावसक्तमुपनेत्रमिवाऽऽबभासे ॥ ८ ॥
ब्रह्मेन्द्र-स्वामिनाम् ॥

५५८ आलिङ्ग्य पूर्वामनुगृह्य याम्यां
सौम्यां समालोक्य सहस्रभानुः ।
सन्ध्याश्रितोऽप्याप निपातमब्धौ
तद्वारुणी[1]-सङ्गफलं चकास्ति ॥९॥ वेणीदत्तस्य ॥

॥ (१८) अथ सन्ध्या ॥

५५९ ध्वान्त-केशललितं कलयन्ती
रक्तवक्त्रममलद्युति-सन्ध्या ।
भासते रविमनुव्रजमानाऽ-
त्यस्तगं पतिमतीव सतीव ॥ १ ॥ गूर्जर-कवेः ॥

---

५५७। SSS. v. 131.
५५८। 1 MS. वारुणीं। SSS. v. 132.
५५९। SSS. v. 147

५६० मृगाङ्कमागतं वीच्य[1] सन्ध्या कुल-वधूरिव ।
दीप-लेखा-मिषादेषा निर्विवेश निकेतनम् ॥२॥ भानुकरस्य ॥

५६१ अम्बरान्तमवलम्बितुकामं
सन्ध्यया समभिवीच्य तु कामम् ।
अन्धकारमथ गम्य-तनूनं
लज्जयेव निरगम्यत नूनम् ॥ ३ ॥ दामोदरस्य ॥

॥ (१८) अथान्धकारः ॥

५६२ अन्धकाराङ्कुरो जज्ञे[1] ववृधे चाविलम्बितम् ।
भीमेन रममाणाया हिडिम्बाया इवात्मजः ॥ १ ॥
चिन्तामणिः ॥

५६३ भङ्क्त्वा[1] पूर्वाद्रि-शृङ्गाण्युडुगण-मिषतश्चण्डमुत्क्षिप्य[2] नाके
रत्नौघं घोरघूक-ध्वनिभर-विसरत्प्रौढ-घण्टा-निनादः ।
(fol. 47b)
सन्ध्या-सिन्दूर-शोणः कलिवल-कलुषः कालयन्नेष लोकान्
धावत्याधूत-मूर्धा रविरथमभितो ध्वान्त-मातङ्गराजः ॥ २ ॥
वेणीदत्तस्य ॥

५६४ दुर्वारः कालचौरो दिनमणिमहरद् यन्नभः[1] प्राङ्गणस्थं
जाग्रत्येवाखिलेऽपि स्वपिति पुनरयं नाङ्गतं नेष्यतीति ।

---

५६० । 1 MS. वीत्य । SLS. v. 148. SA. v. 348.
५६१ । SSS. v. 149. ५६२ । 1 MS. यज्ञे । SSS. v. 154.
५६३ । 1 MS. भक्त्वा । 2 MS. मुत्क्षिप्य । SSS. v. 155
५६४ । 1 MS. यत्तमः ।

इत्यन्तर्भूतचिन्ता सपदि दश दिशो रोदसी-पूरसीम-
द्वाराणि ध्वान्तकूटै रजनिरपि[2] दधे दुर्विपाकैः कपाटैः[3] ॥ ३ ॥

५६५ महाद्रि-सानोरिव चण्डभानोः
पयोधि-पाथःसु[1] बभूव पातः ।
तमोमिषेणेति विशाल-जालं
विधिस्तमुद्धर्तुमिव व्यधत्त ॥ ४ ॥

एतावुद्दामभारत्याः ॥

॥ (२०) अथ नक्षत्रगणः ॥

५६६ सन्ध्या-कुमारिका-हस्त-निक्षिप्ता गगनाङ्गणे ।
सुधाराशि-कपोताय तारकास्तण्डुला इव ॥ १ ॥

कस्यापि ॥

५६७ त्रिलोकी-जयप्रस्थितस्याऽऽत्मयोने-
र्लसत्कुङ्कुमार्घ्य-पात्रं दधाना ।
स्फुरत्कान्ति-ताराक्षतान् भावयन्ती
पुरन्ध्री निशायाति[1] तन्मङ्गलाय ॥ २ ॥

पद्मावत्याः ॥

---

2 MS. अपी । 3 MS. कपाटम् ।

५६५ । 1 MS. पाथः स्सु । SSS. v. 182.

५६७ । 1 MS. पाति । SSS. v. 183.

५६८ सिन्धोः सुधांशु-शफरं परिगृह्य सन्ध्या-
क्षेमङ्करी निपतिताऽम्बर[1]भूरुहाग्रे ।
चञ्चूपुटेन चपलेन[2]तया विकीर्णा[3]-
स्तारामिषेण पतिता इव पत्त्रखण्डाः[4] ॥ ३ ॥

कस्यापि ॥

५६९ आकाश-सौधे शशि-सम्पुटस्थं
तमालनीलं शिवलिङ्गमुच्चैः ।
सिद्धाङ्गनेयं रजनी सकामा
नक्षत्र-रत्नैः परिपूज(fol. 48a)तीव ॥ ४ ॥

वेणीदत्तस्य ॥

५७० व्योम्नि प्राङ्गण-सौम्नि सान्ध्यकिरणं विस्तार्य चेलाञ्चलं
ध्वान्तैः कार्मण-पांशु[1]भिस्तु जगतां द्राग् बन्धयित्वा दृशौ ।
तारा-शौक्तिक-मौक्तिकानि विहगश्रेणी-रवच्छद्मना
जींजींकृत्य च मायिकः स्मरनटो वक्त्राद्बहिर्वर्षति[2] ॥ ५ ॥

कस्यापि ॥

॥ (२१) अथ चन्द्रोदयः ॥

५७१ ओङ्कारो मदन-द्विजस्य गगन-क्रोडैक-दंष्ट्राङ्कुर-
स्तारा-मौक्तिक-शुक्तिरन्धतमस-स्तम्बेरमस्याङ्कुशः ।

---

५६८ । 1 MS. अम्बु । 2 MS. चपटलेन । 3 MS. विकीर्णान् ।
4 MS. खण्डा । SSS. v. 187.

५६९ । SSS. v. 184.

५७० । 1 MS. शांसु० । 2. MS. वर्षति । SSS. v. 1983,

शृङ्गारार्गल-कुञ्चिका विरहिणी-मानच्छिदा-कर्तरी
सन्ध्या-वारवधू-नख-क्षतिरियं चान्द्री कला राजते ॥ १ ॥

कस्यापि ॥

५७२ प्राचीमाश्रयतः करेण रजनी-वक्त्रं चिरं चुम्बतो
रागार्द्रामपरामुरीकृतवतः सन्ध्यां समालिङ्गतः ।
स्मेरां कैरविणीं विधाय बहुशो बद्धाननां पद्मिनीं
बालस्यापि कलानिधेः स्मरकला-पाण्डित्यमुज्जृम्भते ॥ २ ॥

कवि-कङ्कणस्य ॥

५७३ ताराक्षतानिव किरन् कलकण्ठ-नादा-
न्मन्त्राक्षराणि निगदन् कुसुमेषुरेषः ।
लाभाय वासर-मणेर्मुषितस्य सायं
सञ्चारयत्यमृतदीधिति-कांस्यपात्रम् ॥ ३ ॥

भानुकरस्य ॥

५७४ कर्पूरीयन्ति भूमौ सरसि सरभसं कैरवीयन्ति गङ्गा-
कल्लोलीयन्ति नाके दिशि दिशि परितः केत(fol. 48b)कीयन्ति
किञ्च ।

p. 339. v. r. a···गगन-क्रीडस्य । c···प्राणच्छिदे कर्तरी । d···ररसौ-चान्द्री कला पातु वः । SP. v. 3629, p. 539, v. r. c···विरहिणी मर्मच्छिदा । d...कला जृम्भते । SR. v. 13, p. 200, v. r. c··· मर्मच्छिदा । d. सायं···क्षतमियं । SSS. v. 197. SA. v. 378.

५७२ । SSS. v. 199.

५७३ । SSS. v. 194.

५७४ । SSS. v. 200.

हंसीयन्त्यन्तरीक्षे कमलदल-दृशां मौक्तिकीयन्ति कण्ठे
शुक्लीयन्त्यम्बुराशौ विशद-बिस-रुचो रश्मयः शीतरश्मेः ॥४॥

सदाशिवस्य ॥

५७५ पश्चोदेति वियोगिनां दिनमणिः शृङ्गार-रत्नामणिः
प्रौढानङ्ग-भुजङ्ग-मस्तक-मणिश्चण्डीश-चूडामणिः ।
तारा-मौक्तिक-हार-नायक-मणिः कन्दर्प-सीमन्तिनी-
काञ्ची-मध्यमणिश्चकोर-परिषच्चिन्तामणिश्चन्द्रमाः ॥ ५ ॥

जयदेवस्य ॥

५७६ मयूख-नखर-त्रुटत्तिमिर-कुम्भि[1]-कुम्भस्थली-
च्छलत्तरल-तारका-कपट-कीर्ण-मुक्तागणः ।
पुरन्दर-हरिद्दरी-कुहर-गर्भ-सुप्तोत्थित-
स्तुषारकर[2]-केशरी गगन-काननं गाहते ॥ ६ ॥

कस्यापि ॥

---

५७५ । S'P. v. 3626, p. 539 ; the second and third lines are given as follows—तारा-मौक्तिक-हार-नायक-मणिश्चण्डीश-चूडामणिः । प्रौढानङ्ग-भुजङ्ग-मस्तकमणिः कन्दर्प-सीमन्तिनी ; SRB. v. 91, p. 301, v. r. same as in S'P. ; SR. v. 11, p. 200, v. r. a. पश्चोदेति वियोगिनी-दिनमणिश्चण्डीश-चूडामणिः । b. मस्तक-मणिः कन्दर्प-सीमन्तिनी । c. नायकमणिः शृङ्गार-रत्नामणिः । SSS. v. 201.

५७६ । 1 MS. कुम्भ । 2 MS. कट० । SSV. v. 1981, p. 338, v. r. b....तारका-प्रकर-कीर्ण० । SRB. v. 86, p. 301, v. r. b.···तारका-गण-विकीर्ण० । SSS. v. 198 ; SHV. v. 1162.

५७७ अद्यापि स्तन-तुङ्ग-शैल-शिखरे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति[1] क्रोधादिवाऽऽलोहितः ।
उद्यद्दूर[2]तर-प्रसारित-करः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरव-कोश-निस्सरदलि-श्रेणी-कृपाणीं शशी ॥ ७ ॥

महाकवेः ॥

५७८ इन्द्राल-सप्तार्चिरिव[1]ज्वलित्वा
सर्वं दिनं चण्डरुचिः शशाम ।
तदीय-भस्मेव नभोहसन्ती-
विभ्राजमानं तुहिनां[2]शु-बिम्बम् ॥ ८ ॥

चिन्तामणेः ॥

---

५७७ । 1 MS. धिगति । 2 MS. उद्यद्दूर० । SP. v. 3636, p. 541 ; v. r. a…शैल दुर्ग विषमे किं मानिनीनां । b. झगिति । c. उद्यद्दूरतर । d. कोष…श्रेणीकृपाणं । SMV. v. 6, p. 261, v. r. a. स्तन-दुर्ग-शैल-विषमे । b…झटिति । d. कृपाणं । SRB. v. 95, p. 302, v. r. a. स्तनशैलदुर्गविषमे । d. श्रेणीकृपाणं । काव्यप्रकाशे । SUK. 76. 1, p. 54, v. r. a…स्तनशैलदुर्गविषमे वामेक्षणानां हृदि । c. उद्यद्दूर…तत्क्षणं । d. स्फायत्…कोष… कृपाणं । वसुकल्पस्य । SSS. v. 200. SA. v. 384. K Pradīpa. pp. 223-224. v. r. a…स्तनशैलदुर्गविषमे…। c…तत्क्षणात् । d… ( कैरव ) कोष निःसर…। SD. p. 411, v. r. a and d. same as in K pradīpa ; c. प्रोद्यद् दूरतर…।

५७८ । SSS. v. 203. 1 MS. इन्द्रगालसप्तार्चिरिव । 2 MS. तुहिमां० ।

५७९ तमःसमूहोदित-कालिमानं
दृष्ट्वा जगत्-सौधमिमं पुराणम् । (fol. 49a)
सुधोज्ज्वलाभिः कर-कूर्चिकाभिः
सुधाकरः शोधयतीति विद्मः ॥९॥ माधव-भट्टस्य ॥

५८० मदन-विजय-यात्रा-मङ्गलं द्योतयन्ती
विशति जलधि-मध्ये ताम्रपात्रीव भानुः ।
इयमपि पुरुहूत-प्रेयसी मूर्ध्नि संस्थं
कलशमिव सुधांशुं साधुमुल्लालसीति ॥ १० ॥
कालिदासाकवरी-कालिदासयोः ॥

५८१ आकाश-सौधमधिरुह्य दिगङ्गनाना-
मङ्गेषु निक्षिपति काम्यमिवाङ्गरागम् ॥
तारावरोध-वलितो ललिताब्जश्री-
र्ज्योत्स्नाच्छलेन[1] मुदिताखिल-लोक इन्दुः ॥११॥
वेणीदत्तस्य ॥

॥ (२२) अथेन्दु-लक्ष्म ॥

५८२ चन्द्रे यत् किल काल-कूट-शकलं भ्राजिष्णु संदृश्यते
तत् केऽपि प्रवदन्ति भूतलगतां छायां वदन्त्येव ते ।

---

५७९ । SSS. v. 204.
५८० । SSS. v. 205.
५८१ । 1 MS. ज्योऽस्नाच्छतेन । SSS. v. 206.
५८२ । SSS. v. 249.

मन्येऽहन्तु सहस्रभानु-चरण-व्यासक्ति-भक्तिव्रज-
प्रेमोल्लासि-पतिव्रता-द्विजवधू-शापः समुज्जृम्भते ॥ १ ॥

वेणीदत्तस्य ॥

५८३ प्रदोष-मातङ्गमनङ्गदेव-
स्तुङ्ग[1]समारुह्य समागतोऽयं ।
सिन्दूरिते तस्य सुधांशु-कुम्भे
किमङ्कुशो लक्ष्म-मिषेण दत्तः ॥ २ ॥ गणपतेः ॥

५८४ रजनी काचन रमणी शशधर-मुखमण्डले तस्याः ।
रस-लम्पटमलि-कलभं कमपि कलङ्कं समाकलये ॥ ३ ॥

( fol. 49b )

५८५ स्मर-विशिखानिह सविषान्
कर्तुं रजनीश-सम्पुटे रजनी ।
कलयति कलङ्क-गरलं
तदिमे सम्मूर्च्छयन्ति जनान् ॥ ४ ॥

५८६ अनुरागादभिसरतो लङ्घित-जलधेः कलाधिनाथस्य ।
रजनी-मुख-चुम्बनतः शिथिलितमलकं कलङ्कमाकलये ॥ ५ ॥

५८७ स्मर-धीवरेण विततं जगति मनोमीनमाहर्तु म् ।
शशधर-सरसि गभीरे जालं कलये[1] कलङ्कमसुम् ॥ ६ ॥

---

५८३। 1 MS. तुङ्ग। ५८४। SSS. v. 253.

५८५। SSS. v. 254.

५८६। SSS. v. 255.

५८७। 1 MS. मालये। आकलये in SSS, v. 256.

५८८ नभसि सरसि सञ्चरतः शशधर-बिम्बैक-हंसस्य ।
चञ्चुपुटी-सम्पुटिता शैवल-वल्ली कलङ्क-कपटेन ॥ ७ ॥
कविकङ्कणस्यैतौ ॥

५८९ यदिन्दौ कालिम्नः किमपि पदमुत्पश्यसि चिरं
सखे धूम-श्यामं[न] स खलु कुरङ्गो नहि भ्रमः ।
सुधामूर्तेरस्य ध्रुवमशठ-बन्धोश्चतुरया
हृदि न्यस्तो रत्या हर[1]नयनदग्धो मनसिजः ॥८॥ बिन्दुकवेः ॥

५९० सूर्येऽस्तं समुपागते सखि पुरः पश्येदमत्यद्भुतं
नीचैरम्बुजमाननं विदधती मित्रप्रिया म्लायति ।
पूर्णस्यापि कुमुद्वती-परिचितस्याप्यस्य शीतद्युते-
र्यत्तस्यां स्वकरार्पणं तदधुना लग्नो मुखे कालिमा ॥ ९ ॥
चन्द्रचूडस्य ॥

॥ (२३) अथ हर्म्यम् ॥

५९१ लग्नः सौधविवर्ति[1] वारवनिता वक्षोज-कस्तूरिका-
पङ्को लाञ्छ(fol. 50a)न-कैतवेन शशिनि व्यक्तं समुन्मीलति ।
यत् सौधेषु च मन्दिरेषु च लुठन् प्रोञ्छन्निव व्याकुलः
स्नातुं यद् द्विज[2]राज एष जलधेस्तीरं ततो गच्छति ॥ १ ॥
गणपतेः ॥

---

५८८ । SSS. v. 257.

५८९ । 1 MS. गहर । SSS. v. 250.

५९० । SSS. 251.

५९१ । SSS. v. 267. 1 MS. सौधिविभर्ति । सौधविवर्ति in SSS. 2 MS. यद्द्विज ।

५८२ यस्यां सौधोपरिस्था[1] मणिगण-वलिता बालिकास्तारकासु
क्रीडा-प्रभ्रष्ट-कण्ठाभरण-कणधिया[2] पाणिमापातयन्ति ।
पर्णापूर्णं करङ्कं सुललित-वदनाश्चन्द्रमाकल्प्य मध्या-
त्ताम्बूलं भावयन्त्यो रति-रुचिर-रुचः सर्वतः संजयन्ति ॥

वेणीदत्तस्य ॥

५८३ अदीन-कविता-पीन-नवीन-घन-नीरदैः ।
वेण्यां पद्याम्बु-पूर्णायां तरङ्गः पञ्चमोऽभवत् ॥

इति श्रीयाज्ञिक-वंशावतंस-याज्ञिक-नीलकण्ठात्मज-
जगज्जीवन-सूनु-वेणीदत्त-विरचितायां पद्यवेण्यां
पञ्चमस्तरङ्गः प्रस्फूर्तिमगमत् ॥

---

५८२। 1 MS. उपरिस्पा। 2 MS. धिवा। SSS. v. 268.

## षष्ठ-तरङ्गः

५८४ अथानन्दकरं वक्ष्ये षड्तूनाञ्च वर्णनम् ।
यद्रसास्वाद-मुदिता विभान्ति[1] विबुधालयः ॥

॥ (१) तत्र वसन्त-सन्धिः ॥

५८५ आपृच्छन्ते मलयज-तरूनाश्वसन्ते[1]त्य वल्ली-
राभाषन्ते चिरपरिचितान्मालयान्[2] निर्झरौघान् ।
अद्य स्थित्वा द्रविड-महिला-मन्दिरे श्वः प्रभाते
प्रस्थातारो[3] मलय-मरुतः कुर्वते संविधानम् ॥ १ ॥

५८६ आहूतो मलयाचलात्[1] (fol. 50b) प्रचलितो मौहूर्तिकौ मारुतो
नेदिष्ठाः पथि सन्ति कोकिल-गणा गीते प्रतिष्ठास्ततः ।
आशाभिः प्रतिवेश्मिनीभिरभितः सन्त्यज्य कुन्दालयं
सोष्यन्ती सहकार-सन्ततिरलि-श्रेणीभिरावेष्टयते ॥

रघुनाथोपाध्यायानाम् ॥

५८७ विगलित-कुसुमेषु शैशिरेषु द्रुमगर्भेषु वसन्तजेषु सत्सु ।
कतिचिद्दिवसानि पुष्पधन्वा गुणशेषं धनुरुल्लसन्नवाह ॥ २ ॥

रामजितः ॥

---

५८४ । 1 MS. विभाति ।

५८५ । 1 MS. सन्तेत । 2 MS. मालया । 3 MS. प्रभास्थातारो ।

५८६ । 1 MS. ०चलत् ।

५९८ प्रोर्णं सुवर्णवर्णं तूर्णमपूर्णं च कर्णिकापर्णं[1] ।
आदीर्ण-जीर्ण-जीवः कलयति कार्श्यं मनोभवो देवः ॥ ४ ॥
वेणीदत्तस्य ॥

॥ (२) अथ वसन्तः ॥

५९९ असौ मरुच्चुम्बित-चारु-केसरः
प्रसन्न-ताराधिप-मण्डलाग्रणीः ।
वियुक्त-रामातुर-दृष्टि-वीक्षितो
वसन्त-कालो हनुमानिवाऽऽगतः ॥१॥ बालकृष्णस्य ॥

६०० आरूढो मलयानिल[1]द्विपवरं युक्तो विलासानुगैः
पीतः पुष्प-विलोचनैर्वनलता-पौराङ्गनानां गणैः ।
अभ्यास्यद्वन-पत्तने मधु-महीपालः स्फुरत्कोकिला-
लीलालापमिलद्भ्रमद्भ्रमरिका-भाङ्कार-भेरी-रवैः ॥ २ ॥
लोलिम्ब[राज]स्य ॥

---

५९८। 1 MS. कर्णिकपर्णं। SSS. v. 270।

५९९। SSV. v. 1677, p. 284, (भट्टवीजकस्य)। ŚP. v. 3783, p. 569; SMV. v. 4, p 206, v. r. b. प्रसन्न तारापति०। भट्टविज्जाकस्य। SRB. v. 15, p. 331; SSS. v. 277; SHV. v. 861. KS. p. 210. K. pradīpa p. 196; VV. p. 171.

६००। MS. मलयाचल। SSS. v. 275.

६०१ कामस्य जेतु[1]कामस्य मिलनाय महीपतिः ।
दिवो मीनं त्विषामीशो[2] हारीकर्तुमिवाऽऽययौ ॥३॥

६०२ उत्सृष्टमम्बुजहट्ट(fol. 51a)शामिव मानरत्न-
मादाय षट्पद-तिलान् मधु-वारि-पूतान्[1] ।
पुंस्कोकिलस्य कल-कूजित-कैतवेन
संकल्प-वाक्यमयमातनुते रसालः ॥ ४ ॥

भानुकरस्य ॥

६०३ किंशुक-क्षितिरुहां विलसन्तः
कोरकाः कुटिलतां कलयन्तः ।
पान्थ-वारण-विदारण-ताम्राः
काम-केसरि-नखा इव रेजुः ॥ ५ ॥

लोलिम्बराजस्य ॥

६०४ रागारुणैः किशलयैर्विशिखैरिदानी-
मासज्य कार्मुक-लतामुदियाय कामः ।
किञ्चाधुना सुर-सरोजमुखी-विमुक्ता
तल्लाज-वृष्टिरिव चञ्चति चन्द्रिकापि ॥ ६ ॥

सदाशिवस्य ॥

---

६०१ । 1 MS. ज्ञेतु । 2 MS. ०मीशो । SA. v. 617.

६०२ । 1 MS. यूतान् ।

६०४ । SSS. v. 276.

६०५ भमइ भमर-पुञ्जो मञ्जरीणं[1] णिकुञ्जे
सरइ सुरहि-गन्धो मालईणं[2] समीरो।
हरइ हिअअ-दावं काअली कोइलाणं[3]
सिढिलअइ अणङ्गो माणिणी-माण-गण्ठि[4] ॥७॥

६०६ भमरीस[1] भमराणां चरणारोविण कम्पिआसोओ।
उदम्मिमञ्जरीहिं(?) लुम्पइ माणं[2] मणस्सिणी-हिअए ॥ ८ ॥

॥ (२) अथ मलयानिलः ॥

६०७ कावेरी-तीर-भूमीरुह[1]-भुजग-वधू-भुक्त-मुक्तावशिष्टः
कार्णाटी-चीन-पीनस्तन-वसन-दशान्दोलन-स्पन्दमन्दः।
लोलल्लाटी-ललाटामृत-तिलक[2] लता[3]-लास्य-लीला-विलोलः
कष्टं भो दाक्षिणात्यः प्र(fol. 51b)सरति पवनः पान्थ-
कान्ता-कृतान्तः ॥ ९ ॥

कस्यापि ॥

६०८ प्राप्तः प्राज्यमिव श्रमं जलजिनी-सौरभ्यभारं वह-
न्नुद्दाम-स्तवकानमन्नव-लता[1]-लक्ष्मीमिवाऽऽलोकयन्।

---

६०५। 1 MS. मञ्जरीणां। 2 MS. मालईणं। 3 MS. कोइलानां। 4. MS. गठिं

६०६। 1 MS. भमिराणां। 2 MS. लुपइमाणं।

६०७। S´P. v. 3811, p. 575, v. r. d. हा कष्टं दाक्षिणात्यः। राक्षस-पण्डितयोः। SSS. v. 292. 1 This word repeated in MS. 2 SSS. reading तिलक; S´P. reading ०ललाटालक-ललित-लता० better. 3 MS. लाता।

खीकुर्वन् मद[2]-मन्थरानिव गतीर्वामभ्रुवां विभ्रमा-

न्मन्दं मन्दमुपाजगाम पवनः पाटीर-वाटी-तटात् ॥ १० ॥

लोलिम्बराजस्य ॥

६०८ भृङ्गाली-कण्ठ-मालाः स्फुरित-कमलिनी-धूलिभिर्धूसराङ्गाः

स्पन्दन्तश्चन्द्रकन्या[1] लघुतर-लहरी-शीकरासार-लालाः ।

अङ्कादङ्कं व्रजन्तो विकसित-विलसत्केतकी-मल्लिकानां

मोदन्ते मन्दमन्दं मलय-गिरि-दरी-गर्भतो वातपोताः ॥ ११ ॥

अकबरी कालिदासस्य ॥

६१० पथि पथि लता लोलाचीभिः स्रवन्मधु-शीकरं

कुसुम-निकरं वर्षन्तीभिः सहर्षमिवार्चितः ।

मधुकर-वधू-गीतासक्तं कुरङ्गकमास्थितः

प्रसरति वनं मन्दं मन्दं वसन्त-समीरणः ॥ १२ ॥

श्रीजयदेवस्य ॥

॥ (४) अथ वसन्त-विरहिणी ॥

६११ पिकाली वाचालीभवतु बहुधाऽलीक-कथने

मृणाली व्यालीव व्यथयतुतरामङ्गमनिशम् ।

---

६०८ । 1 MS. नसम्मदलता । 2 MS. no मद । SSS. v. 293.

६०९ । 1 MS. चन्द्रकन्या । SRB. v. 41, p. 327, v. r. a···मालाः स्फुटित । b. अच्छगुश्चन्द्र...। c···केतकीमालतीनां ।

६१० । SSS. v. 294.

६११ । SRB. v. 26, p. 284, v. r. a···वाचाली भवति···वचने । b···व्यथयति(तराम)···। c···सखि किरति पीयष···। SSS. v. 309. SHV. v. 2025.

विष-ज्वाला-जालं किरतु मम पीयूष-किरणो
जगत्प्राणः प्राणानपहरति केयं परिणतिः ॥ १ ॥
अकब(fol. 52a)री-कालिदासस्य ॥

६१२ एसो मअण-सिणेहो मअण-सरे चूअ अंकुए भमअम् ।
कलअदि पिअसहि गअलं[1] जेण ण जीवेदि मारिओ कोवि
॥२॥ वेणीदत्तस्य ॥

॥ (५) ग्रीष्मोऽथ ॥

६१३ माध्वीक-दुर्भिक्ष(?) मधुव्रतानां
प्रदोषकालः पिक-पण्डितानाम् ।
जरालवो मन्मथ-नायकस्य
निदाघ-कालः समुपाजगाम ॥ १ ॥ कस्यापि ॥

६१४ रेजे पुष्पैर्ग्रीष्ममासाद्य मल्ली
मल्लीं सद्यः संश्रयन्ति स्म भृङ्गाः ।
भृङ्गैस्तत्राऽऽरम्भि हर्षेण गानं
गाने लौल्यं लेभिरे योगिनोऽपि ॥ २ ॥
लोलिम्बराजस्य ॥

---

६१२ । 1 MS. गलअं । ६१३ । SSS. v. 311.

६१४ । SRB. v. 1, p. 335, v. r. b…संश्रयन्तेस्म । SSS. v. 312.

६१५ मलय-पवन-चञ्चच्चन्दन-स्यन्द-शीतं
जलनिधि-तनयायाः कण्ठमालिङ्ग्य दोर्भ्याम् ।
दिनकर-करजाल-ज्वालया दूनदेहो
जलधि-पयसि देवो[1] वासुदेवो निदद्रौ[2] ॥ ३ ॥

६१६ क्रूर-संसार-संहार-वासना-बन्ध-वासितः ।
अजायत वृषारूढो भैरवो महसां निधिः ॥ ४ ॥
भानुकरस्यैतौ ॥

६१७ वासन्ती-कुसुमान्तराणि मधुपाः[1] शाखाः खगाः शाखिनां
सेवन्ते सरितां तटानि हरिणाश्छाया-विविक्तानि च ।
हंसा भुक्त-विसाः श्रमालसवधूमाहूय निद्रातुराः
फुल्लाम्भोज-पलाश-मण्डप-तले निद्रां भजन्तेतराम् ॥ ५ ॥
रामचन्द्रागमिनः ॥

६१८ तुषाराक्र(fol. 52b)राक्रोशितामुष्णरोचिः
समाघ्राय जायां प्रियां पद्मिनीं च ।
सखायं निजं ग्रीष्म-कालं विधाय
ज्वलज्ज्योतिरुद्द्योतते तज्जयैषी[1] ॥ ६ ॥
पद्मावत्याः ॥

---

६१५। 1 MS. दोवो। 2 MS. निनिद्रौ। SSS. v. 325.

६१७। 1 MS. मधुपा। SSS. v. 326.

६१८। 1 MS. जज्जयैषी। See Sanskrit Poetesses, Part A, 2nd. edition, v. 66, p. 29.

॥ (६) ग्रीष्म-वात: ॥

६१९ वारंवारं स्पृशन्त: परम-परिमलारम्भमम्भोज-दण्डं
खेलन्त: खे विशाले सपदि विदधतो मञ्जु घोषालि-सङ्गम् ।
आचामन्त: समन्तादमृतमथ समाश्लेष-भाजोऽप्सरोभि-
र्भान्त्येते हन्त देवा इव वन-सुमनोबन्धवो गन्धवाहा: ॥ १ ॥

६२० कृत्वा कर्णाट-कान्ता-कुच-कनक-गिरि-प्रान्त-सञ्चार-लीलां
झम्पामासाद्य पम्पा-पयसि वन-भुवि च्छिन्न-मल्ली-रजस्का: ।
आकर्षन्त: परस्तान्निगडमिव कलध्वान-पुष्पन्धयालीं
धावन्त्येते मदान्धा मदन-नरपते: सिन्धुरा गन्धवाहा: ॥
अकबरी-कालिदासस्य ॥ २ ॥

६२१ धूली-कर्करिण: प्रचण्ड-तपन-ज्वालालि-मालाधरा:
स्पर्शादेव सरिज्जलं तरु-दलं संशोषयन्त: क्षणात् ॥
पीतोन्मुक्त-फणीश-फूत्कृति-विष-ज्वालालि-युक्ता इव
स्वच्छन्दं परितो भ्रमन्ति बहुशो ग्रीष्मस्य वाता अमी ॥ ३ ॥
पद्मावत्या: ॥

---

६१९। वारं वारं स्पृशन्ति—SSS. v. 328.

६२०। SRB. v. 35, p. 326, v. r. a. कृत्वा कार्णाट···।
c. आकर्षंति पुरस्ता···। SSS. v. 330.

६२१। See Sanskrit Poetesses, Part A, 2nd edition, v. 67, p. 29 ; SSS. v. 331.

॥ (७) ग्रीष्म-दिवसः ॥

६२२ उत्पात-केतुरिव मन्मथ-नायकस्य
वज्रप्रहार इव केलि-लता-वनस्य (fol. 53a)।
संहार-काल इव पान्थ-वधू-जनस्य
ग्रीष्मस्य भाति दिवसः सखि दूरितांशः ॥ १ ॥

गौर्याः ॥

॥ (८) अथ [ ग्रीष्म ] विरहिणो ॥

६२३ चूडा-रत्नमपांनिधिर्यदि भवेच्चेत् कुण्डलं गण्डकी
कावेरी यदि कङ्कणं यदि पुनर्ग्रैवेयकं गौतमी।
मुक्ता-स्रक् सुरनिम्नगा यदि यदि स्यान्मेखला नर्मदा
कौशेयं यदि कौशिकी कृशतनोस्तापस्तदाऽपैति वा ॥ १ ॥

॥ (९) अथ वर्षाः ॥

६२४ जाने स्मर-ज्वरेणेयं जप-होमादि-तोषिता।
कालीव लीलया लोला घनाली प्रकटा[1]ऽभवत् ॥ १ ॥

६२५ वक[1]-खग-दशना काली विद्युद्रसना बभौ नाके।
चातक-चय-शुभ-रसना नीरद-वसनाऽसमा वर्षा ॥ २ ॥

मर्मैता ॥

---

६२२। See Sanskrit Poetesses, Part A, 2nd. edition, v. 32, p. 14.

६२३। SRB. v. 97, p. 291, v. r. a...चेत्कुण्डलं। d...स्तदाप्येति वा। SSS. 339.

६२४। 1 MS. प्रकटी०। SSS. v. 350.

६२५। 1 MS. वग०।

६२६ नाविर्भवन्ति ननु नूतन-पत्र-वल्ली-[1]
चित्रीकृताखिल-पयोधर-भार-रम्याः ।
विस्फारिताहिलिह-चन्द्रक-चारुनेत्रा
हर्षाय कस्य वनिता इव नाम वर्षाः ॥

बिन्दु-कवेः ॥

६२७ अम्बरं स्तिमितमम्बु-धारया व्यक्त एष परितः पयोधरः ।
प्रावृषा किमपि लज्जमानया मीलिते रवि-विधूविलोचने ॥

विश्वनाथस्य ॥ ४ ॥

॥ (१०) तत्र जलधरः ॥

६२८ शीतलादिव सन्त्रस्तं प्रावृषेण्यान्नभस्वतः ।
नभो बभार नीरन्ध्रं जीमूत-कुल-कम्बलम् ॥ १ ॥

सर्वदासस्य ॥

६२९ वस(fol. 53b)न्त-विश्लेषमपारयन्त्या
भुवो निदाघ-स्मर-तापितायाः ।
आशा-वयस्याभिरुपाक्रियन्ते
पयोद-नीलोत्पल[1]-पल्लवानि ॥२॥ कूर्माचलनृपतेः ॥

---

६२६ । 1 MS. वल्लीः । SSS. v. 351.

६२७ । SSS. v. 352.

६२८ । SMV. v. 4, p. 219 ; SRB. v. 5. p. 240 ; SSS. v. 349.

६२९ । 1 MS. ०मीलोत्पल० । SRB. v. 17, p. 340, v. r. b...स्मर-ताप-शान्त्यै । c...वयस्याभिरुदाक्रियन्ते ; SSS. v. 360.

६३० स्फुरन्तः पिङ्गलाभासो धरण्या[1]मिन्द्रगोपकाः ।
सरक्त-वान्त-पान्थस्त्री-जीवा इव विभान्त्यमी ॥ ३ ॥

त्रिविक्रम-भट्टस्य ॥

६३१ तमःश्यामे व्योम्नि स्फुर-कनक-लेखाङ्कुर-चय-
प्रभा विद्योतन्ते निकष इव खद्योत-निचयाः ।
सहस्रांशोरंशा इव चरम-शैल-व्यतिकरा-
द्विशीर्णाः पर्यस्ताः पथिक-पृथु-निश्वास-पवनैः ॥ ४ ॥

कृष्णापण्डितस्य ॥

॥ (११) विद्युत् ॥

६३२ याचितेन बहु चातक-द्विजै-
रम्बुदेन जलदान-पूर्वकम् ।
हेम-यष्टिरिव दूरमीरिता
सञ्चचार रुचिराऽचिरप्रभा ॥१॥ कविराजस्य ॥

॥ (१२) दुर्दिनम् ॥

६३३ मही-मण्डले मण्डलीभूत-पाथो-
धरारब्ध-वर्षासु वर्षासु सद्यः ।

---

६३० । 1 MS. धारणया० । SSV. v. 1721, p. 292, v. r. c. सरक्तवान्ता । d...चकासति । SP. v. 3864, p. 585, v. r. c. सरक्ताः पान्थपत्नीनां । d...चकासिरे; SHV. 105; SSS. V. 373. SA. v. 553.

६३१ । SSS. v. 374,

६३२ । SSS. v. 366. SA. v. 555.

६३३ । SRB. v. 47, p. 341, v. r. a. महीमण्डली...। b. (धरारब्ध)द्वर्षासु ।

कदम्बे प्रसूनं प्रसूने मरन्दो
मरन्दे मिलिन्दो मिलिन्दे मदोऽभूत् ॥ १ ॥
लोलिम्बराजस्य ॥

६३४ घनतर-घनवृन्द-च्छादिते व्योम्नि लोके
सवितुरथ सुधांशोः संकथैव व्यरंसीत् ।
रजनि-दिवस-भेदं मन्दवाताः शशंसुः
कुमुद-कमल-गन्धानाहरन्तः क्रमेण ॥ २ ॥
रघपतेः ॥

६३५ मेचक-द्युति-द(fol. 54a)लान्तर-लीन[1]-
ज्योतिरिङ्गण-चमत्कृति-रम्याः ।
पादपा इह चकासति मेरोः
क्ष्मां गता इव हरिन्मणिकूटाः ॥ ३ ॥
कृष्णपण्डितस्य ॥

६३६ नायं गर्जः किमुत मदन-प्रौढ-निर्याण[1]शब्दो
नैते मेघाः किमुत मदनस्योद्धुराः सिन्धुरास्ते ।
नैषा विद्युत् किमुत जयिनो तत्करे कापि शक्ति-
र्नैन्द्रश्चापः किमुत जगतां मोहनास्त्रं स्मरस्य ॥ ४ ॥
पद्मावत्याः ॥

६३४ । SA. v. 564. ६३५ । 1 MS. नील० । 2 MS. इति ।
६३६ । 1 MS. निःस्वान० । See Sanskrit Poetesses, Part A, 2nd. edition, v. 68, p. 30.

॥ (१३) वर्षा-विरहिणी ॥

६३७ कोऽयमालि भयदः सखि मेघः
किं करोति कुरुते जल-वर्षम् ।
भ्रान्त-लोचन-युगेऽतिकरालः
काल एष कुरुते शर-वर्षम् ॥ १ ॥

६३८ जीवनं हरति जीवनदोऽय-
मात्मजोऽपि मम कृन्तति गात्रम् ।
प्राण एष जगतां हरतेऽसून्
धिग्विधे[1]मयि कथं विपरीतः ॥ २ ॥

श्रीवेणीदत्तस्यैतौ ॥

॥ (१४) अथ वर्षा-वायुः ॥

६३९ वल्गद्वारिद-वृन्द-वारण-घटारूढाश्च धारा-शरा
विद्युद्वल्लि-कृपाणकाश्च विसरद्गर्जा-मृदङ्गारवाः ।
भूयश्चातकवृन्द-वन्दि-निवहैः संस्तूयमाना भृशं
धावन्ति स्मर-भूपतेरतिमहावीराः समीरा अमी ॥ १ ॥

श्रीवेणीदत्तस्य ॥

---

६३७ । SSS. v. 395.
६३८ । 1 MS. धिग्विधे । SSS. v. 396.
६३९ । SSS. v. 375.

॥ (१५) घन-गर्जितम् ॥

६४० या कामिनी सा यदि मानिनी स्यात्
स्मरस्य राज्ञो ह्यपराधिनी स्यात् ।
इतीव दण्डैः (fol. 54b) परिताड्यतेऽसौ-
कादम्बिनी काम-नृपस्य ढक्का ॥ १ ॥

कविराजस्य ॥

॥ (१६) अथ शरत् ॥

६४१ नीलेन्दीवर-लोचना कलरणद्धंसावली[1]-मेखला
नील-ज्योतिललाम-विस्फुरदलि-श्रेणी-सुवेणी-रुचिः ।
चञ्चत्कान्ति-मृगाङ्क-मञ्जुल-मुखी ज्योत्स्ना[2] प्रभोद्भासिनी
लोकानां नयनोत्सवं वितनुते कान्तेव कान्ता शरत् ॥ १ ॥

श्रीवेणीदत्तस्येदम् ॥

६४२ प्रबोधभाजः परमस्य पुंसो
विलोचने द्वे किमु मुक्त-निद्रे ।
व्यपेत-पाथोधर[1] पद्म-रोधे
व्यराजतां व्योमनि पुष्पवन्तौ ॥ २ ॥

कविराजस्य ॥

---

६४० । SRB. v. 2, p. 340, v. r. c···दम्भैः किमु ताड्यते । SSS. v. 363. SA. v. 560.

६४१ । 1 MS. कलरणद्धंस्वा । 2 MS. ज्योस्ना ।

६४२ । 1 MS. पाथोदर । SSS. v. 408.

६४३ सहसा शरदा नवीकृता-
स्तिमिरेणोपहिता नृनां दृशः ।
हरिदुच्छलदच्छचन्द्रिका-
सितसौवीर-रजोमयाञ्जनैः ॥ ३ ॥

चिन्तामणि-दीक्षितानाम् ॥

६४४ दिक्षु खीत्य-शर-पाण्डुरभागा
पक्वशस्य-फलितोदरभागा ।
गुर्विणीत्वमिव रम्यतराऽगा-
द्भूः शरत्-समय-सङ्गत-रागा ॥ ४ ॥

दामोदर-भट्टानाम् ॥

॥ (१७) अथ शरद्विरहिणी ॥

६४५ अपि मरणमुपैति सा मृगाङ्के
विलसति क्वैव कथा रसान्तरस्य ।
अयि कथमधुना दधाति शान्तिं
विषमशर-ज्वर-तीव्र-देह-दाहः ॥ १ ॥

कृष्णपण्डितस्य ॥

६४६ कुसुमाउह[1] कुसुमाइ पञ्चसराओ पुणोणङ्गो ।
ता(fol. 55a)भण भविअ मणोजो विद्धसि हिअआइं तुमं
केण ॥ २ ॥

रामचन्द्रागमिनः ॥

---

६४५ । SSS. v. 422.

६४६ । 1 MS. कुसुमाइ ।

॥ (१८) अथ [शरत्] सरः ॥

६४७ सुरभिसमोर[1]-समाहत-वीचि[2]-परिनर्तितानि[3]पद्मानि ।
षट्पद-पटल-समाहतमम्बुनि रेणुं किरन्तीह ॥ १ ॥

सदाशिवस्य ॥

६४८ नलिनी कापि नवीना विदग्धमधुपेन पीडिताऽतिभृशम् ।
आकिरति बहु परागं तेन सरागं सरो भाति ॥ २ ॥

वेणीदत्तस्य ॥

॥ (१९) हेमन्तः ॥

६४९ हेमन्त-हिम-निष्पन्दमवलोक्य मनोभवम् ।
प्रहर्तुं सुभ्रुवां चेतो रविर्दैवो[1]धनुर्दधौ ॥ १ ॥

६५० अम्बरमेष रमण्यै यामिन्यै वासरः प्रियान् ।
अधिकं ददौ निजाङ्कादथ सङ्कुचितः स्वयं तस्थौ ॥ २ ॥

भानुकरस्यैतौ ॥

६५१ चक्रे चण्डरुचा समं रणमसौ हेमन्त-पृथ्वीपति-
र्ये ये तत्र जिता दिवाकर-करास्ते तेऽमुना तत्क्षणात् ।

---

६४७ । 1 MS. ससमीर० । 2 MS. विचौ । 3 MS. full-stop after नर्तितानि ।

६४९ । 1 MS. रविर्दैतो । रविर्दैवो in SS. SSS. v. 423. SA. v. 599.

६५० । 1 MS. दधौ । SSS. v. 424. SA. v. 601.

६५१ । SSS. v. 425.

कान्तानां कुच-भूधरे निदधिरे मन्येऽहमेवं तदा
नो चेन्मन्दकरः कथं दिनकरस्तत्रस्थ तन्वी-कुचः ॥ ३ ॥
लोलिम्बराजस्य ॥

६५२ लज्जाः प्रौढ-मृगीदृशामिव नव-स्त्रीणां रतेच्छा इव
स्वैरिण्या नियमा इव स्मितरुचः कौलाङ्गनानामिव ।
दम्पत्योः कलहा इव प्रणयिता वाराङ्गनानामिव
प्रादुर्भूय तिरोभवन्ति(fol. 55b) सहसा हैमन्तिका वासराः ॥
॥ ४ ॥ कविकङ्कणस्य ॥

॥ (२०) अथ हेमन्त-विरहिणी ॥

६५३ चन्द्रस्खण्ड-करायते[1] हिममरु[2]द् दावाग्नि-दाहायते
शीतं घर्म-भरायते भ-रुचिरा रात्रिश्च कल्पायते ।
क्वाणः प्राण-भणायते शुचिपयः क्वाथस्य कल्पायते
हारो मार-शरायते किमपरं प्राणोऽपि पान्थायते ॥ १ ॥
वेणीदत्तस्य ॥

॥ (२१) अथ हेमन्त-रात्रिः ॥

६५४ व्यातन्वतो गात्र-विभूषणानि
संज्ञापितानेक-रहस्य-केलिः ।
प्राणप्रियं सङ्गमयन्त्यसौ मे
विभावरी बाल-सखीव भाति ॥१॥ माधवस्य ॥

---

६५२ । SSS. v. 426. SA. v. 602.

६५३ । 1 MS. चण्डकारायते । 2 MS. मरु । SSS. v. 440.

॥ (२२) अथ शिशिरः ॥

६५५ शिशिरः कम्पयल्लोँकं त्रासयन् द्विज-सुन्दरीम् ।
प्रकटीचकार भूपत्वं भापतिः संहरन् करान् ॥ १ ॥

श्रीवेणीदत्तस्य ॥

६५६ तुषार-भार-विध्वस्तं[1] प्रेक्ष्य पङ्कज-काननम् ।
पङ्केरुहदृशः शङ्के पाणिः कम्पमविन्दत ॥ २ ॥

६५७ आचुम्ब्य बिम्बाधरमङ्गवल्लि-
मालिङ्ग्य संस्पृश्य कपोलपालिम् ।
श्रीखण्डमादाय करेण कान्तः
सन्त्रासयामास सरोरुहाक्षीम् ॥ ३ ॥

भानुकरस्यैतौ ॥

६५८ स्फुर्जत्-स्फार-दलाढ्य-शालि-सुषमा-सौगन्ध्य-विजृम्भिते
कुन्दोद्दाम-सदातिमञ्जुल-वलद्भृङ्गीभिरङ्गीकृते ।
हेमन्ते हिम-शैल-शृङ्ग-शिखरादायाति वायौ भृशं·
श्यामाऽहर्निशमाश्रिता न पुरुषैस्ते वञ्चिता वेधसा ॥ ४ ॥

वेणीदत्त(fol. 56a)स्य ॥

॥ (२३) [ अथ ] शिशिर-वायुः ॥

६५९ विभावसोः सारथिरेव वायु-
र्जैन-प्रसिद्धं ननु सत्यमेतत् ।

---

६५५। SSS. v. 443.

६५६। 1 MS. विध्वुषां। SSS. v. 450.

६५७। SA. v. 610.

शीतोऽपि यच्छैशिर-मारुतोऽयं
संधुक्षयन् वाति हृदि स्मराग्निम् ॥ १ ॥
रामजितः ॥

६६० सीत्कारं जनयन् महीधर[1]वधूरम्याधरं खण्डयन्
रोमाञ्चं प्रथयन् सुगन्धि-कुसुमामोदं समाकर्षयन् ।
कामं सङ्कलयन् वियोगि-हृदयान्य[2]म्भोरुहाण्यर्दयन्
कामोवर्द्धति कामिनी-सुखकरो वायुः प्रिये शैशिरः ॥ २ ॥
वेणीदत्तस्य ॥

॥ (२४) अथ महावनम् ॥

६६१ इह महिष-विषाण-व्यस्त-पाषाण-पीठ-
स्खलित-जनित-रोहिद्गर्भिणी-भ्रूणहत्याः ।
कुहर-विहरमाण-प्रौढ-भल्लूक-हिक्का-
चय-चकित-किरात-न्यस्त[1]शस्त्रा वनान्ताः ॥ १ ॥
गणपतिः ॥

६६२ क्रीडत्[1]-किन्नर-कन्यका-करतलाक्रान्त[2]क्वणद्-वल्लकी-
क्वाणोत्क्रामित-काम-कार्मुक-कल-क्रेङ्कार-कोलाहलम् ।

---

६६० । 1 MS. महीवर० । महीधर in SSS. 2 MS. ०ण्यम्भो० । SSS. v. 453.

६६१ । 1 MS. जत्यस्त० । SUK. 9. 5, p. 284, b. स्खलन-सुलभ···। मुरारेः ।

६६२ । 1 MS. क्रीडन् । 2 MS. ०कान्त० ।

उन्निद्रेन्दुकला-दरिद्र-कुमुद-व्यामोद-मुग्धाध्वनि
ध्वांक्षुर्वन्मधुपेन्द्र-मन्द्र-निनदैरुद्यानमुद्योतते[3] ॥ २ ॥

सदाशिवस्य ॥

## ॥ (२५) अथ तपोवनम् ॥

६६३ श्यामाक-तण्डुल-विलोप[1]कदर्थिताभि-
र्त्ताभिरग्नि-शरणेषु सधर्मिणीभिः ।
तत्त्रास-हेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगी मुनयो हसन्ति ॥ १ ॥

मुरारेः ॥

६६४ विहाय कमला-कान्तमबला-स्तन-लालसान्[1](fol. 56b) ।
जहसुः[2]कुसुम-व्याजादिव यत्र महीरुहाः ॥ २ ॥

६६५ तपोवने केसरिणी-करिण्यो-
रिहाङ्गतं शावकयोर्व्यलोकि ।
व्यातेनतुर्यत् स्तन-पान-काले
मात्रोर्विपर्यास-विलासमितौ ॥ ३ ॥

भानुकर-गणपत्योः ॥

---

3 MS. मुच्चोन्तते ।

६६३ । 1 MS. विलेप० ।

६६४ । 1 MS. लालसात् । 2 MS. जहरसुः ।

॥ (२६) अथान्योक्तयः ॥

॥ (१) तत्र कल्पतरुः[1] ॥

६६६ किं न द्रुमा जगति जाग्रति लक्ष-संख्या-

स्तुल्योपनीत-पिक-काक-फलोपभोगाः ।

तुल्यस्तु कल्पविटपी फल-संप्रदानं

कुर्वन् य एष विबुधानसृतैक-वृत्तीन् ॥ १ ॥

श्रीहर्षस्य ॥

६६७ सन्त्येव नन्दनवने शतशः सुवृक्षाः

कालेन पुष्प-फल-तर्पित-नाकि-दक्षाः ।

तेष्वेक एव सुरराज-मनोऽभिलाष-

तत्काल-दान-पटुरस्ति स कल्पशाखी[1] ॥ २ ॥

गौर्याः ॥

॥ (२) अथ चम्पकः ॥

६६८ यत्राऽऽदृत[1]स्त्वमलिना मलिनाशयेन

किं तेन चम्पक[2]विषादमुरीकरोषि ।

विश्वाभिराम-नव-नीरद-नील-वेशाः

केशाः[3] कुशेशयदृशः कुशलीभवन्तु ॥१॥ रुद्रस्य ॥

---

६६६ । 1 MS. कल्पतकः । SRB. v. 33, p. 237, v. r. c. धन्यस्तु···। d. कुर्वन् सदेव···।

६६७ । 1 MS. oशेखी । See Sanskrit Poetesses, Part A, 2nd edition, v. 33, p. 14.

६६८ । 1 MS. नादृत । 2 MS. पञ्चकo । 3 MS. केशां । SRB. v. 69, p. 238.

६६९ कान्त्या काञ्चन-कान्तया परिमलैर्भाग्यैकभोग्यैस्तथा
सौन्दर्येण च साधुनैव कुसुमं हा हन्त न त्वत्समम्
अक्षोधं शृणु किन्तु दूषणमिव त्वय्यस्ति किञ्चित् पुन-
स्तत्त्वज्ञैर्यदचुम्बितं त्वमसि रे चाम्पेय पुष्पन्धयैः ॥ २ ॥

बिन्दुकवेः ॥

॥ (३) अथ अगुरुः ॥

६७० एणाद्याः पशवः किरात-परिषन्नैषा गुणग्राहिणी
सञ्चारोऽपि न नागरस्य विषयोच्छिन्नं[1] मुनीनां मनः ।
धू(fol. 57a)मैनैव सुगन्धिना प्रतिपदं दिक्चक्रमामोदय-
न्नामूलं परिदह्यतेऽगुरु-तरुः कस्मै किमाचक्ष्महे[2] ॥ १ ॥

भुवनानन्दस्य ॥

॥ (४) अथ चूतः ॥

६७१ नम्रोऽसि नोच्चैः फलसम्पदा य-
त्तनोषि यद्वा सुमनोविकाशम् ।
न युक्तमप्रोन्नतमौचितीयं (?)
भृङ्गं पिकं पश्यसि यत् समानम् ॥ १ ॥

माधवस्य ॥

---

६७०। SRB. v. 63, p. 238, v. r. c....सुगन्धिनाल विपिने...।
1 MS. विषयोच्छन्नं । 2 MS. आचक्ष्महे ।

६७२ कति कति न वसन्ते वल्लयः[1] शाखिनो[2] वा
सुरभित-सुमनोभिर्भूषिताङ्गा बभूवुः ।
तदपि युव-जनानां प्रीतये केवलोऽभू-
दभिनव-कलिकालो-सारशाली रसालः ॥ २ ॥
लोलिम्बराजस्य ॥

६७३ आस्तां गाढतरानुशीलन-विधिः संस्पर्शनं दूरतः
संश्लेषे विषयीकृतोऽसि न मनागक्ष्णोः[1] पदं प्रापितः ।
किं ब्रूमः सहकार तावक-गुणानन्यादृशो[2] दुर्लभान्
सौरभ्येण यदध्वगानपि मुहुः प्रीणासि दूरादपि ॥ ३ ॥

६७४ शश्वन्निसर्ग-मलिनाः सहकार कामं
लुण्ठन्ति तान्यपि मधूनि तव द्विरेफाः ।
युक्तं न तत्तव कषाय-रस-प्ररोहै-
रेतान् प्रतारयसि यत् कलकण्ठ-यूनः ॥ ४ ॥
रुद्रस्यैतौ ॥

६७५ फलानि भुक्तानि सुधा-रसानि
निःशङ्कमङ्के च सदा स्थितं यैः ।

---

६७२ । 1 MS. वल्लियः । 2 MS. शाखिनो । SRB. v. 116, p. 240, v. r. b. किसलय-सुमनोभिः शोभमाना···।

६७३ । 1 MS. no गक्ष्णोः । 2 MS. अन्यादृशो । SRB. v. 130, p. 240, v. r. b. संभाषा विषयो···।

६७४ । SRB. v. 112, p. 240.

तेऽप्यखण्डजाम्बूतरुं तटस्थाः
पश्यन्ति ह्वारीत[1]निकृष्यमाणम् ॥ ५ ॥
वेणीदत्तस्य ॥

॥ (५) अथाशोकः ॥

६७६ पत्राणि राज-रमणीकर-सोदराणि
माणिक्य-भङ्ग-रुचिराणि च कोरकाणि ।
काकैक-भोजन-रसानि मलीम[1]सानि
शोकाय केवल(fol. 57b)मशोक-तरोः फलानि ॥
॥ १ ॥ कस्यापि ॥

६७७ गर्वायसे विकच-कोरक-पुञ्ज-गुञ्ज-
दुन्मत्त-षट्पद-घटा-विभवेन किं नु ।
वामभ्रुवां चरण-ताडन-दोहदानि
किं नाम न स्मरसि तावदशोक तानि ॥ २ ॥
रुद्रस्य[1] ॥

॥ (६) [ अथ ] किंशुकः ॥

६७८ किंशुक किं शुक-मुखवत्[1] कुसुमानि मधौ विकाशयस्यनिशम् ।
यस्यां जनोऽनुरागी सा गौरितैः किमुच्चार्या ॥ १ ॥
कविराजस्य ॥

---

६७५ । 1 MS. ह्वारीन ।

६७६ । 1 MS. no म ।

६७७ । 1 MS. द्रस्य । SRB. v. 74, p. 238, v. r. a... कोरक-मञ्जु-गुञ्ज । b. दुद्वृत्त... ।

६७८ । 1 MS. शुकवत् । SR. v. 1, p. 252.

॥ (७) अथ चन्दन-तरुः ॥

६७९ श्रीखण्ड गन्ध-सुरभीकृत-भूमिभाण्ड-
खण्डांशु-चण्ड-विष-भाण्ड-भृतैर्वृतोऽसि ।
किं खिद्यसे जयति चन्द्र-मनोज्ञ-खण्डं
पृथ्वीपतीन्द्र-निटिले न खण्ड-पङ्कः ॥१॥ ममायम् ॥

६८० न स्पृश्यसे यद्यपि चन्दन त्वं
मूर्खैर्महाजिह्मग-वेष्टितत्वात् ।
मत्वाश्रयन्ते कृतिनस्तु शीतं
नित्यं हृदि त्वामिह धारयन्ति ॥२॥ माधवस्य ॥

॥ (८) अथ कदम्बः ॥

६८१ जयति तरु-कदम्बे मन्द-माध्वीक-धारा-
मुदित-मधुप-वृन्दोद्गीत-पुष्प[1]-प्रचारः ।
सकल-भुवन-लोकानन्द-भूतः[2] कदम्बः
कमल-नयन-रूपं यस्य पुष्पैरशोभि ॥ १ ॥
श्रीवेणीदत्तस्य ॥

॥ (९) अथ द्राक्षा[1] ॥

६८२ त्वं पीयूष दिवो विभूषणमसि द्राक्षे परीक्षेत[2]को
माधुर्यं तव विश्व[3]तोऽपि विदिता माध्वीक-साध्वी कथा ।

---

६८१ । 1 MS. ०पुष्पं । 2 MS. ०भूत ।

६८२ । SR. v. 2, p. 339, v. r. b…विदितं माध्वीक-माध्वीकता । c. एतत् किं तु मनागरुन्तुदमिव...। 1 MS द्रातृका । 2 MS. परीसेत । 3 MS. स्वा० ।

अक्रोधं शृणु किं त्वर[4]न्तुदमिव ब्रूमो न चेत् कुप्यसि[5]
य: कान्ताधर-पल्लवे मधुरिमा नान्यत्र कुत्रापि[6] स:(fol. 58b) ॥
॥ १ ॥ कस्यापि ॥

६८३ यद्यपि न भवति हानि: परकीयां चरति रासभे द्राक्षाम् ।
असमञ्जसमिति मत्वा तथापि खलु खिद्यते चेत: ॥ २ ॥
कवि-डिण्डिमस्य ॥

॥ (१०) अथ निम्ब: ॥

६८४ सुरभित-सकल-वनान्ते मल्ली-प्रान्ते च चम्पकोपान्ते ।
वितरसि कटुतर-गन्धं निम्ब न लज्जां कथं कुरुषे ॥
वेणीदत्तस्य ॥

॥ (११) अथ भ्रमर: ॥

६८५ अपसर मधुकर दूरं परिमाल-बहुलेऽपि केतकी-कुसुमे ।
इह न हि मधु-लव-लेशो भवति परं धूलि-धूसरं वदनम् ॥
॥ विकटनितम्बाया: ॥

६८६ सानन्दमेव मकरन्दमिहारविन्दे
विन्देत षट्पद-युवेति जनैरटङ्कि ।
दैवादकाण्ड-परिमुद्रित-पुण्डरीक-
कोषादभूदिह नि:सरणं पुमर्थ: ॥ २ ॥
रामचन्द्रस्य ॥

---

4. MS. र० । 5 MS. कुप्यसी । 6 MS. कुत्रपि ।
६८३ । SP. v. 1026, p. 164, v. r. b. असमञ्जसं हि दृष्ट्वा । c···परितप्यती चेत: । SRB. v. 137, p. 241 ; SR. v. 1, p. 250.
६८५ । Sanskrit Poetesses, v. 139, p. 60.

६८७ इह रूप-मात्र-सारे चित्रकृते कमल-कह्लारे[1] ।
न रसो नापि च गन्धो मधुकर-बन्धो मुधा भ्रमसि ॥३॥ रुद्रस्य[2] ॥

६८८ निरानन्दः कौन्दे मधुनि विधुरो बाल-वकुले
न साले सालम्बो[1] लवमपि लवङ्गे न रमते
प्रियङ्गौ नासङ्गं रचयति न चूतेऽपि रमते
स्मरल्लँक्ष्मी-लीला-कमल-मधु-पानं मधुकरः ॥ ४ ॥ कस्यापि ॥

॥ (१२) अथ मक्षिका ॥

६८९ परिभ्रमः संग्रहण-श्रमस्य
करे परं स्थास्यति मक्षिका वः ।
धूलिं विनिक्षिप्य[1] भवन्मुखेषु-
वोवाद्यकस्मान्मधु भोक्ष्यसे(?) वः ॥१॥ माधवस्य ॥

॥ (१३) अथ पिकः ॥

६९० शृगाल-ग्रध्र-शार्दूल-दूषितं दण्ड-काननम् ।
पञ्चमं गायता तेन कोकिले(fol. 58b)न प्रतिष्ठितम् ॥
भानुकरस्य ॥

---

६८७ । 1 MS. काह्लारे । 2 MS. रुद्रस्या ।

६८८ । 1 MS. सालाले । SMV. v. 8, p. 82, v. r. b… सालम्बे । c…न चूते विचरति । क्षित्तीपस्य । SRB. v. 94, v. r. c. न चूते विचरति ।

६८९ । 1 MS. विनक्षिप्य ।

६९० । SRB. v. 119; p. 224, v. r. a…दन्तुकाननम् । b. पञ्चमं गायताऽनेन ।

॥ (१४) अथ शुकः ॥

६८१ द्राक्षां प्रदेहि[1] वदने मधु वा निधेहि
देहे विधेहि[2] किमु वा मणि-भूषणानि ।
जाति-स्वभाव-चपलः पुनरेष कीर-
स्तत्रैव यास्यति कृशोदरि मुक्त-बन्धः ॥ १ ॥

भानुकरस्य ॥

६८२ बाल्यात् सुवर्ण-मणि-पञ्जर-मध्यवर्ती
द्राक्षाम्बु-दुग्ध-सित-शर्कर-भक्त-भोजी ।
श्रीगुर्जरेन्द्र-तनया-कर-लालितोऽपि
जात्युत्थ-दंशन-विधिं न जहाति कीरः ॥ २ ॥

श्रीवेणीदत्तस्य ॥

॥ (१५) अथ काकः ॥

६८३ आ मरणा[1]दपि विकृतं कुर्वाणाः स्पर्धया सह मयूरैः ।
किं जानन्ति वराकाः काकाः केका-रवं कर्तुम् ॥ १ ॥

गोवर्धनस्य ॥

---

६८१ । 1 MS. पिधेहि । 2 MS. देहेह । SR. v. 9, p. 228, v. r. a···प्रदेहि मधु वा वदने विधेहि । b···किमु वा कर-लालनानि । SRB. v. 187, p. 227, v. r. a···मधु वा वदने । b. same as in SR.

६८३ । 1 MS. ०मारणा० । SP. v. 882, p. 139; SMV. v. 2, p. 77; SRB. v. 207, p. 228; SR. v. 2, p. 231.

६८४ मा काक कोकिल-शतानुगत प्रसर्प-
दर्पावमत्य खगराजमितो व्रजेथाः ।
ज्ञास्यन्ति चेत् करटकं तु भवन्तमेते
हास्यन्ति कङ्करवदुज्ज्वल-रत्न-सङ्घात् ॥ २ ॥

पद्मावत्याः ॥

६८५ खगेषु मान्यो पिक एव नान्यो
यश्च[1]ान्य-बालं स्वहितेन पाति ।
भक्ष्यं करोति खननैः सहैव
विरौति सर्वं जनता[2]हिताय ॥३॥ वेणीदत्तस्य ॥

॥ (१६) [ अथ ] नागवल्ली ॥

६८६ किं वीरुधो बत न सन्ति सहस्र-संख्या
यासां दलानि न परोपकृतं भजन्ति ।
एकैव वल्लिषु विराजति नाग-वल्ली
या नागरी[1]-वदन-चन्द्रमलङ्करोति ॥ १ ॥

६८७ का हि तुलामधिरोहति भुज(fol. 59a)ग-लतायाः[1]
प्रतानिनीष्वन्या[2] ।
या खण्डिताऽपि रदनैर्जनयति वदने विलक्षणां सुषमाम् ॥२॥
श्रीवेणीदत्तस्य ॥

---

८४ । See Sanskrit Poetesses, Part A, 2nd edition, v. 62, p. 27.

६८५ । 1 MS. याo । 2 MS. जाननाताo ।

६८६ । 1 MS. नगरी । SR. v. 1, p. 255, v. r. a. वीरुधो भुवि । b···परोपकृति ।

६८७ । 1. MS. लातायाः । 2 MS. प्रतानितीत्वन्या ।

॥ (१७) [ अथ ] मल्ली ॥

६९८ न मल्ली-समा कापि वल्लीषु वल्ली
प्रसून-व्रजा[1]मोहितानेक-प[2]ल्ली ।
यतोऽलिः समास्वादिता[3]नेक-वल्ली-
मतल्ली-परागोऽस्ति[4]तल्लीन एव ॥ १ ॥

श्रीवेणीदत्तस्य ॥

॥ (१८) [ अथ ] लवङ्ग-वल्ली ॥

६९९ स्तवकास्तव पांशुभिः परीताः[1]
परितः प्राङ्गण-सीम्नि यल्लुठन्ति ।
अपि दुष्कृतकेन केन वत्से
हलिक-द्वारि लवङ्गि पुष्पितासि ॥ १ ॥

सार्वभौम-कवीन्द्रस्य ॥

॥ (१९) [ अथ ] मालती ॥

७०० केलिं विहाय नव-वल्लि-मतल्लि[1]कायां
त्वत्-सौरभाहृत-मनाः स[2]मुपागतस्त्वाम् ।
हे मालति प्रणय[3]संवलितं वदामो[4]
नायं[5] मधुव्रत-युवा समुपेक्षणीयः ॥ १ ॥

शङ्कर-मिश्रस्य ॥

---

६९८ । 1 MS. ०वृता० । 2 MS. व । 3 MS. यतोलिसमस्वादित । 4 MS. ०गोहस्ती ।

६९९ । 1 MS. परीता ।

७०० । 1 MS. मनाल्लि० । 2 MS. ०हृतमानार । 3. MS. प्रलय । 4 MS. वादमो । 5 MS. नायां ।

७०१ अन्याभ्यो वन्याभ्यो मालति धन्याऽसि वल्लरीभ्यस्त्वम् ।
यत् किल तवैव सविधे क्रीडति मधुपः सदैव मुदितोऽयम् ॥२॥
श्रीवेणीदत्तस्य ॥

॥ (२०) [ अथ हस्ती ] ॥

७०२ तापो नापगतस्तृषा न च कृशा धौता न धूली तनो-
र्न स्वच्छन्दमकारि कन्द-कवलः का नाम केली-कथा ।
दूरोत्क्षिप्त-करेण हन्त करिणा स्पृष्टा नवा पद्मिनी
प्रारब्धो मधुपैरकारणमहो झङ्कार-कोलाहलः ॥१॥
लक्ष्मण-सेनस्य[1] ॥

७०३ केलिं कुरुष्व परिभुङ्क्ष्व[1] सरोरुहाणि
गाहस्व[2] शैल-तट-निर्झ(fol. 59b)रिणी-पयांसि ।
भावानुरक्त-करिणी-कर-लालिताङ्ग
मातङ्ग[3] मुञ्च मृगराज-वधाभिलाषम् ॥ २ ॥
आनन्दवर्धनस्य ॥

---

७०२। The verse in the MS. is awfully corrupt. 1 MS. लक्ष्मणसेनस्य। S'P. v. 923, p. 146, v. r. d···( मधुपैर-कारणं ) मयो। लक्ष्मणसेनस्य। SMV. v. 10, p. 89, v. r. a··· स्तृषाऽपि न क्षमा। c. दूरोन्मुक्त-करेण। d···( मधुपैरकारणं ) मयो। उमापतिधरस्य। SRB. v. 84, p. 232, v. r. d···झङ्कार। लक्ष्मण-सेनस्य। SUK. 39. 2, p. 252, v. r. a. and c. same as in SMV.। आचार्यगोपीकस्य। SR. v. 7, p. 211 ; PT. v. 254 p. 32, v. r. c. दूरोन्मुक्त-करेण···स्पृष्टापि नो।

७०३। 1 MS. परिभुंच। 2 MS. माहस्वा। 3 MS. मांतङ्ग।

७०४ स करी भगदत्तस्य प्रेर्यमाणः पुनः पुनः ।
न करोति वचो नूनं दरिद्रस्येव[1] योषितः ॥३॥ व्यासस्य॥

७०५ व्रजन[1]कोप-युतोऽपि महीपते-
स्त्यजति[2] नैव करी[3] निज-बन्धनम् ।
स्वपद[4]मापतितं खलमप्यहो
वहति नैव जहाति महामनाः ॥ ४ ॥
भूपति-मिश्रस्य ॥

॥ (२१) [ अथ ] सिंहः ॥

७०६ स्वैरं सैरिभ-यूथपैरिह पयः शृङ्गेण विक्षोभितं
तारं न्यङ्कु-कुलं चड[1]ङ्कृति-शतैर्विद्रावितं[2] द्वीपिभिः ।
हेला-क्षिप्त-पदे पराक्रम-निधावुज्जृम्भमाणे[3] हरौ
चित्रं सैव तदैव चित्र[4]-लिखितेवाऽऽसी[5]दरण्य-स्थली ॥ १ ॥
रुद्रस्य ॥

---

SSS. v. 623, p. 96, S´P. v. 920, p. 145, v. r. same as in SSV.; SRB., v. 68, p. 231, v. r. as in SSV.; SR. v. 4, p. 211, v. r. same as in SSV. SHV. v. 612.

७०४। 1 MS. ०स्यैव।

७०५। 1 MS. व्रजनू०। 2 MS. स्तुजति। 3 MS. करो।
4 MS. सुपद०।

७०६। 1 MS. चड चड। 2 MS. विद्राचितं। 3 MS. निदावुजम्भमाणौ। 4 MS. तदैव विप्र०। 5 MS. ०वासो।

७०७ जातः स्तन्यं न जग्राह कण्ठीरव-किशोरकः ।
चक्षुर्व्यापारयामास कुञ्जे कुञ्जर-शालिनि ॥ २ ॥

भानुकरस्य ॥

७०८ सिंह-शावक विलज्जसे कथं
सज्जसे न करि-कुम्भ-पाटने ।
विस्फुलिङ्ग इति तार्ण-संहतिं
किं न भस्म कुरुते कपोटजः ॥३॥ श्रीवेणीदत्तस्य ॥

७०९ मान्योऽसि मान-मञ्जुल सिं(fol. 60a)ह मृगेन्द्र
प्रचण्ड-भुज-दण्ड ।
यः प्रौढ-दिग्गजोद्भव-पलल-रतो हंसि नो हरिणान् ॥ ४ ॥

पद्मावत्याः ॥

७१० दिगन्ते श्रूयन्ते मद-मलिन-गण्डाः करटिनः
करिण्यः कारुण्या[1]स्पदमसम-शीला वनमृगाः ।
इदानीं लोकेऽस्मिन्ननुपम-शिखानां पुनरयं[2]
नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः ॥ ५ ॥

---

७०९ । See Sanskrit Poetesses, Part A, 2nd edition, v. 62, p. 27.

७१० । 1 MS. कारुणा० । 2 MS. पुनरयं । SR. v. 20, p. 209, v. r. b· ·शीलाः खलु । SRB. v. 32, p. 330, v. r. b... शीलाः खलु । PT. v. 200, p. 49, v. r. same as in SR. RG. 536, v. r. b···शीलाः खलु ( मृगाः ) ।

७११ घोर-ध्वनिभिरलं ते जलधर मे मासिको गर्भः[1] ।
उन्मद-वारण[2]-बुद्ध्या मध्येजठरं समुच्छलति ॥ ६ ॥

जगन्नाथस्य ॥

॥ (२२) [ अथ ] कस्तूरी-हरिणः ॥

७१२ सौरभ्येण त्रिभुवन-मनोहारिणा काननेऽस्मिन्
यत् कस्तूरी-हरिण भवता वासितो दिग्विभागः[1] ।
तस्यैतत्ते फलमुपगतं[2] [3]मार्गणैर्लुब्धकानां
विद्धः प्राणांस्त्यजसि न गुणाः[3] श्रेयसे निर्गुणेषु ॥ १ ॥

सार्वभौमस्य ॥

७१३ यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्[1] मृषा
नैषां गर्व-गिरः शृणोषि न च तान्[2] प्रत्याशया धावसि ।
काले बाल-तृणानि खादसि सुखं[3] निद्रासि निद्रागमे[4]
तन्मे[5] ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः[6] ॥ २ ॥

---

७११ । 1 MS. गभः । 2 MS. वारणा० । SR. v, 18, p. 205, v. r. a...ते नीरद । b...समुच्चलति । SRB. v. 18, p. 212, v. r. a...ते नीरद...।

७१२ । 1 MS. विभाग । 2 MS. मुपगतें । 3-3 MS. मार्गणैः । SRB. v. 113, p. 233, v. r. b. सत्कस्तूरी । c···फलमुपगतं पत्रिभि···।

७१३ । 1 MS. जूषे द्रु । 2 MS. न यु नरः । 3 MS. मुखं । 4 MS. तिद्रागमे । 5 MS. मे । 6 MS. य यः । SUK. 42. 3, p. 305, v. r. b···गर्व वचः...न पुनः···। शिलनस्य । SR. v. 10, p. 214, v. r. c...खादसि परं ।

॥ (२३) [ अथ ] श्वा ॥

७१४ आबद्ध-कृ(fol. 60b)त्रिम-सटा[1]-विकटांस-भित्ति-
रारोपितो मृगपतिः पदवीं यदि श्वा ।
मत्तेभ-कुम्भ-तट[2]-पाटन-लम्पटस्य[3]
नादं करिष्यति स किं हरिणाधिपस्य ॥ १ ॥
भोज-प्रबन्धस्य ॥

॥ (२४) [ अथ ] पृथ्वीधरः ॥

७१५ नानारत्न-युतोऽसि केशरि-शतैः संसेवितोऽस्यादरात्[1]
सिद्धाध्यासित-कन्दरोऽसि[2] सुमनोवृन्दाभिनन्द्योऽसि[3] च ।
किं चान्यत् सुरसान्वितोऽसि नितरां काठिन्यमालम्बसे
तत् सिन्धुंश[4]-समुद्भवस्य भवतो नैवानुकूलं गिरे ॥ १ ॥
वेणीदत्तस्य ॥

॥ (२५) [ अथ ] जलधरः ॥

७१६ शीर्णे पुष्प-फले दले विगलिते मूले गते शुष्कतां
कस्मै किं हितमाचरिष्यसि परीतापस्तु ते स्थास्यति ।

---

७१४ । 1 MS. ०साकटा । 2 MS. मन्तेभकुन्तभट० । 3 MS. लंपटस्य । SSV. v. 995, p. 116, v. r. a…सटा वलितांस-भित्ति । b. रारोप्यते । d…करिष्यति कथं । भल्लटस्य । SRB. v. 28, p. 230, v. r. a…सटा-जटिलांसभित्ति । d…करिष्यति कथं ।

७१५ । 1 MS. ०स्यादश । 2 MS. ०कन्दरोरि । 3 MS. ०वृन्दातिमंद्रोसि । 4 MS. सिंद्वश० ।

कर्तव्यो हृदि वर्तते यदि तरोरस्योपकारस्त्वया
मा कालं गमयाम्बुवाह समये सिञ्चैनमम्भोभरैः ॥ १ ॥

प्रभा[1]कर-भट्टानाम् ॥

७१७ यत् पल्लवं समभवत् कुसुमं यदासीत्
तत् सर्वमस्य भवतः पयसः प्रसादः ।
यद्भूरुहे फल-विधौ न ददासि वारि
प्राचीनमम्बुद यशो[1] मलिनीकरोषि ॥ २ ॥

भानुकरस्य ॥

॥ (२६) [ अथ ] जलम् ॥

७१८ शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः सङ्गेन यस्यापरे ।
किं चातः परमस्तु ते स्तुति-पदं यज्जी(fol. 61a)विनां जीवनं
त्वं चेन्नीच-पथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥ १ ॥

जगज्जीवन-व्रज्यायां लक्ष्मणसेन-पुत्रस्य ॥

---

७१६ । 1 MS. प्रभ० । ७१७ । 1 MS. ०मम्बुजयशो ।

७१८ । ŚP. v. 1165, p. 190, v. r. c…परमुच्यते…यज्जीवनं देहिनां । SMV. v. 20, p. 123, v. r. b…शुचितां व्रजन्त्यशुचयः सङ्गेन । c. किं वातः…त्वं जीवनं प्राणिनां । d…गच्छसि पुनः । SUK. 14. 5, p. 236, v. r. c…यज्जीवनं जीविनां । तस्यैव (केशटस्य) । SR. v. 6, p. 257, v. r. b…भजन्त्यशुचयः । c. किं वातः परमुच्यते…यज्जीवनं देहिनां । d…कस्त्वां निषेद्धुं । SRB. v. 14, p. 245, v. r. c. किं वातः परमुच्यते…यज्जीवनं देहिनां । PT. v. 253, p. 62, v. r. b…भजन्त्य…स्पर्शेन…। c…परमुच्यते…

॥ (२७) [ अथ ] चातकः ॥

७१९ शीर्णे कोटर-वृक्षके निपतिते नीडे पतत्पक्षती
शुष्यत्तालुतले च ताम्यति गले चञ्चू-पुटे शीर्यति ।
ग्लानिं प्राप्य परं प्रयाति च मृतिं शक्रात् परं याचते
नान्यं क्वापि कदापि मान-महतामग्रेसरश्चातकः ॥ १ ॥
श्रीवेणीदत्तस्य ॥

॥ (२८) [ अथ ] समुद्रः ॥

७२० पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्वं शरण्यो गिरीणां
सुत्राम-त्रास भाजां त्रिदश-विटपिनां जन्म-भूमिस्त्वमेव ।
गाम्भीर्यं तच्च तादृक् त्वयि सलिलनिधे किन्तु विज्ञाप्यते ते
सर्वोपायेन मैत्रा[1]वरुणि-मुनि-कृपा-दृष्टयः काङ्क्षणीयाः ॥१॥
हरिहर-भट्टानाम् ॥

७२१ द्वि-जिह्व-दुष्टोऽपि शिलोच्चयेन
जात-प्रहारोऽपि मुखात् सुषाव[1] ।
रम्यां[2] सुधामिव स दुग्ध-राशिः
सीमैक एवात्र गभीरतायाः[3] ॥ २ ॥ माधवस्य ॥

---

यज्जीवनं जीविनां। AK. v. 273, v. r. a···सहजः...। b...
स्पर्शेन...। c. ( किं ) चान्यत् कथयामि···त्वं जीवनं जीविनां।

७२०। 1 MS. मित्रा०। SRB. v. 39, p. 217, v. r. c···
विज्ञाप्यमेतत्। PT. v. 246, p. 60, v. r. b···( भाजां ) विबुध···।
c···विज्ञाप्यमेतत्। तैलङ्ग-हरिभट्टस्य।

७२१। 1 MS. सुखा वा। 2 MS. रम्य᳚। 3 MS. गभीरमायाः।

॥ (२९) अथ रत्नोत्पत्तिः[1] ॥

७२२ धावल्य-मात्रात्[2] स्फटिक त्वमस्य
मा साम्य-कामो भव हीरकस्य ।
यतः परीक्षा-विधिषु त्वयैव
[3]भङ्गोऽनुभाव्यो न च हीरकेण ॥१॥ माधवस्य ॥

७२३ पीयूषेण[1]·सुराः श्रिया मधुरिपुर्मर्यादया मेदिनी
श्र(fol. 61b)क्षः कल्प-महीरुहैः कुमुदिनी-नाथेन लोक-त्रयम् ।
येनामी[2] परितोषिता जलनिधिः केनापि मज्जन् मुने-
र्गण्डूषोदर-मण्डले परिखुठन्[3]वाचाऽपि नाश्वासितः ॥ २ ॥
भुवनानन्दस्य ॥

७२४ आस्फालितैर्जलधिरूर्मि-परम्पराणां
दूरीकरोति[1] यदि रत्नमवस्तु-बुद्ध्या ।
रत्नाकरत्वमपि तस्य भवेद्विनष्टं
रत्नं तु हन्त भविता महदङ्ग-धार्यम् ॥ ३ ॥
रमानाथ-कविराजस्य ॥

७२५ गर्वान्दोलित-कल्लोलैः सारं वारिधि-गर्जनम्[1] ।
येनात्मनीर-शोषेण[2]तोषितं भुवन-त्रयम् ॥ ४ ॥ शिवस्य ॥

---

७२२ । 1 MS. ०पत्तिम् । 2 MS. ०माला । 3 MS. गङ्गो० ।
७२३ । 1 MS. पीयूखेन । 2 MS. येनामीः । 3 MS. परिलुठद् ।
७२४ । 1 MS. no ति ।
७२५ । 1 MS. गर्जतम् । 2 MS. नौषेणा ।

॥ (३०) अथ सरः ॥

७२६ भ्रमरैर्गतं मधुकरैश्चलितं
प्रवरैः प्रयातमपि पद्म-दृशाम्[1] ।
विभवे गते सकलमेव गतं
ध्रुवमेकमञ्चति यशः सरसः ॥ १ ॥ भानुकरस्य ॥

७२७ भेकैः[1] कोटर[2]-शायिभिर्मृतमिव क्ष्मान्तर्गतं[3] कच्छपैः
पाठीनैः पृथु-पङ्क-पीठ-लुठनाद्यस्मिन्मु[4]हुर्मूर्च्छितम् ।
तस्मिञ्छुष्क-सरस्यकाल-जलदेनाऽऽगत्य तच्चेष्टितं
यत्राऽऽकुम्भ-निमग्न-वन्य-करिणां यूथैः पयः पीयते ॥ २ ॥
अकालजलदस्य ॥

॥ (३१) [ अथ ] राजहंसः ॥

७२८ गाङ्गमम्बु (fol. 62a)सितमम्बु[1] यामुनं
कज्जलाभ[2]मुभयत्र मज्जतः ।

---

७२६ । 1 MS. पद्मदृशाम् ।

७२७ । 1 MS. भकैः । 2 MS. कोटरः । 3 MS. ०गतः । 4 MS. चस्मिन् । SUK., 23. 5, p. 242, v. r. b. पाठीनैस्तनु-पङ्क···यस्मिन् । c. तस्मिन्नेव । d. येना । छित्तोपस्य । SRB. v. 65, p. 213, v. r. b. पीठ-लुठितैर्यस्मिन् । दाक्षिणात्यस्य । SSV. v. 843, p. 137, v. r. b. पृथु-पङ्क-कूट-लुठितैर्यस्मिन्मुहु० । d. येनाकण्ठ-निमग्न···। दाक्षिणात्यस्य । SHV. v. 27.

७२८ । 1 MS. सितमन्य । 2 MS. कज्जभाल । SMV. v. 1, p. 74 ; SRB. v 12, p. 221. ASR. p. 215 ; KPradīpa, p. 388 ; SD. p. 613.

राजहंस तव सैव शुभ्रता
चीयते न च नचापचीयते ॥ १ ॥

७२९ अपसरणमेव शरणं मौनं वा तत्र[1] राजहंसस्य ।
कटु रटति निकटवर्ती वाचाटष्टिट्टिभो यत्र[2] ॥
[3]कयोरप्येतौ ॥ २ ॥

७३० चित्ते वेत्ति मराल-राज-गृहिणी[1] कान्तः क्वचिन्मे सर-
स्यानन्दाढ्य-तनुः[2] पयोज-कवलं भुङ्क्ते स्वयं निर्वृतः ।
नेयं जातु विजानति(?) बहुमनाः[3] पङ्कं समालोडयन्-[4]
कीर्णं-स्वच्छ-सुपत्त्रतिर्यदनिशं शैवालकं नाऽऽप्नुते ॥ ३ ॥
वेणीदत्तस्य ॥

॥ (३२) [ अथ ] शतपत्रम् ॥

७३१ किं कुप्यसि कस्मै वन-सौरभ[1]-साराय कुप्य निज-मधुने ।
यस्य कृते शतपत्र[2] प्रतिपत्रं मृद्यसे[3] भ्रमरैः ॥ १ ॥
भोज-प्रबन्धस्य ॥

---

७२९ । 1 MS. तव । 2 MS. यत् । The readings यत्र and तत्र are found in SRB. 3 MS. कायो० । S'P. v. 798, p. 124 ; SRB. v. 8, p. 221 ; SR. v. 3, p. 217, v. r. b... वाचाल... । PT. v. 220, p. 54.

७३० । 1 MS. गृहणी । 2 No visarjanīya in तनु in MS. 3 MS. वकुमनाः । 4 MS. ०लोडत् ।

७३१ । 1 MS. no भ । 2 MS. श पत्र । 3 MS. मृद्यसेः ।

७३२ हे मल्लि हे मालति हे लवङ्गि[1]
न तादृशो क्वापि भवादृशीनाम् ।
क्षणं समाधाय मधुव्रतं या
विस्मारयत्यम्बुजिनी-वियोगम् ॥ २ ॥
अकबरी-कालिदासस्य ॥

७३३ कमलिनि विमले जले जनिस्ते
तदुचितमाचरणं न[1] सन्तनोषि ।
मलिनमलि-कुलं यतस्त्वमन्तः
शशि(fol. 62b)-किरणान्[2] विमलान्[3] बहिष्करोषि ॥ ३ ॥
केसरि-कवेः ॥

७३४ नलिनी वनं परित्यज्य(?) भयाद्दङ्कं जलाशयम् ।
कर्मणा तव दग्धा सा हिम-रूपेण वह्निना ॥ ४ ॥
जगज्जीवन-व्रज्यायाः ।

७३५ रे पद्मिनी-पत्र भवच्चरित्रं
चित्रं प्रतीमो वयमत्र किञ्चित् ।
त्वं पङ्क-जन्मापि यदच्छ-भावा-
दपि स्पृशस्यम्बु न पङ्क-सङ्गि ॥ ५ ॥ लक्ष्मणस्य ॥

---

७३२ । 1 MS. लवन्ति ।
७३३ । 1 MS. तत् । 2 MS. शशिकिरण० । 3 MS. विमला ।

॥ (३३) अथ भानुः ॥

७३६ करान् प्रसार्य[1] रविणा दक्षिणाशावलम्बिना ।
न केवलमनेनाऽऽत्मा दिवसोऽपि लघूकृतः ॥ १ ॥

जगज्जीवन-व्रज्यायाः ॥

७३७ स्वर्भानु-दंष्ट्रान्तरगोऽपि भानु-
रुल्लासयत्यम्बुज-वृन्द-खण्डम् ।
स्व-कष्ट-कालेऽपि महात्मनां हि
महादरो ह्याश्रित-पालनेषु ॥ २ ॥

श्रीवेणीदत्तस्य ॥

७३८ उदित-मुदितो[1] हन्ति ध्वान्तं सहस्रकरः[2] करै-
र्निहत-निहतं भूयो भूय[3]स्तमः परिजृम्भते ।
विरमति तमो नेदं नायं निषीदति भानुमान्
न खलु विकसद्वैरा धीराः कथञ्चिदुदासते ॥ ३ ॥

कृष्ण-पण्डितस्य ॥

॥ (३४) [ अथ ] कुमुद्वती ॥

७३९ अये सुधाकैरविणि[1] व्यधायि
मुधा सुधा-धामनि बन्धु-भावः ॥

---

७३६ । 1 MS. प्रासर्य । SSV. v. 550, p. 83, भट्टनारायणस्य । S'P. v. 742, p. 115 ; SRB, v. 17, p. 73 ; SR, v. 4, p. 147.

७३८ । 1 MS. मुदित । 2 MS. कारः । 3 MS. भूया ।

७३९ । 1 MS. कैटविनि ।

जनापवादः परितः प्रयातः

समागमो हन्त न जातु जातः ॥ १ ॥

जगज्जीवन-व्र(fol. 63a)ज्यायाः ॥

॥ (३५) अथ चन्द्रः[1] ॥

७४० भूयो भासय भूतलं वियदलंकारं कुरु त्वं करैः

स्वैरं कैरविणीं[2] विनोदय दयाकारी चकोरे भव ।

एतस्मिन् हरिणे तु चन्द्र करुणा-शून्यं मनो मा कृथा

योऽसौ राहु-रदादितो[3]ऽपि भवतो नैवान्तिकं मुञ्चति ॥ १ ॥

भवदेवस्य[4] ॥

७४१ नीराणि नक्र-वडवानल[1]-दूषितानि

तीराणि दुस्तर-तरङ्ग-सु[2]दुस्तराणि ।

श्राव्यं किमस्य जलधेर्यदि नैव सूनु[3]-

राशा-प्रसाधन-करो रजनीकरः स्यात् ॥ २ ॥

भानुकरस्य ॥

७४२ ध्याता भाल-त[1]लानलैः[2]कवलिता कण्ठोग्र-हालाहलै-

रालीढाऽथ जटाटवी-वलयितैराशीविषाणां गणैः ।

---

७४० । 1 MS. चन्दः । 2 MS. कैरिविणीं । 3 MS. रद्दाहिंतो ।
4 MS. भवद्देवस्य ।

७४१ । 1 MS. ०वाल । 2 MS. no सु । 3 MS. नैच्छसूनु ।

७४२ । 1 MS. no लत । 2. MS. no visarjaniya. 3 MS. कीर्णां । 4 MS. भस्मधि० । 5 MS. उभाति । 6 MS. no visarja-

कीर्णा[3] भस्मभि[4]राहताऽस्थि-पटलैर्विद्धा जटाग्रैरपि
स्त्रीयामुज्झति[5]माधुरीं हरशिरोरत्नं किमिन्दोः[6]कला ॥२॥

कृष्ण-पण्डितस्य ॥

॥ (२६) [ अथ ] गृहान्योक्तिः ॥

७४३ विश्राम[1]-स्थिति-हेतो मन्दिर नैतत्तवोचितं चरितम् ।
यदुपरि तृणानि कुरुषे गुरुतर-वंशान[2]धो नयसि ॥ १ ॥

शिवानन्दस्य ॥ [समाप्ता अन्योक्तयः]

॥ (२७) [ अथ ] उदार-प्रशंसा ॥

७४४ अमृतं किरति हिमांशुर्विषमेव फणी समुद्गिरति ।
गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥ १ ॥

कृष्ण-पण्डितस्य ॥

॥ (२८) [ अथ ] गुण-प्रशं(fol. 63b)सा ॥

७४५ गुणवान् मलिनोऽपि काच-हारः[1]
स्तनयोः कान्तिमुपैति कामिनीनाम् ।
हरि-हारित-वारणेन्द्र-[2]मुक्ता-
गुण-मुक्ता बहिरेव संलुठन्ति ॥१॥ गम्भीर-सिंहस्य ॥

---

nīya. SR. v. 9, p. 200, v. r. a. धाता कालतला·· कण्ठस्य । b···( जटाटवी ) विलुठितैः । c. कन्ना···क्लिन्नाऽर्द्रचर्माम्बरैः । d. स्त्रीयां मुञ्चति ; SRB. v. 43, p. 211, v. r. a···कण्ठस्य···। b & c & d. same as in SR. AK. p. 405, v. r. a···कण्ठस्य (हालाहलै) ।

७४३ । 1 MS. मिश्राम । 2 MS. ०ना० ।

७४४ । SRB. v. 117, p. 48.

७४५ । 1 MS, काचकारः । 2 MS. चार० ।

७४६ कठिनस्यापि हृदयं गुणवानार्द्रयेद्[1] दृशा ।
चन्द्रकान्तोपलं चन्द्रः स्वांशुभिर्द्रावयत्यसौ ॥ २ ॥

॥ (२९) [ अथ ] संसर्ग-प्रशंसा ॥

७४७ सुजनो दुर्जन-सङ्गात् त्यजति न शीलं स्वः[1] चन्दन[2] विटपो ।
काल-भुजङ्गम-सङ्गी सौरभमङ्गीकरोति न किम् ॥ १ ॥
कविराजस्य ॥

७४८ मालाकारो यदि सरसिजं[1] शाल्मलीनां प्रसूनै-
र्ग्रथ्नाति स्वःप्रथित-सुरभि[2]-प्रार्थनीयं प्रधानैः ।
तस्य ख्याता[3] सततममिता[4] जाल्मता सर्व-लोके
सोऽप्यम्भोजैः सुरभि-महिमा हीयते किं नु तादृक् ॥ २ ॥

॥ (३०) अथ केसरः ॥

७४९ नक्तन्दिवोपात्त-घटाम्बु-सेकैः
संवर्धितः[1] केसर-पादपोऽयम् ।
मामेव सन्तापयति श्रितो हि
कृतघ्नतां रक्षति कः पलाशी ॥ १ । माघः ॥

---

७४६ । 1 MS. आर्द्रयो ।

७४७ । 1 MS. सं । 2 MS. चन्दनो ।

७४८ । 1 MS. सरजितं । 2 MS. सुरभिः । 3 MS. ०जितः ।
4 MS. सततयाममिता ।

७४९ । 1 MS. संवर्धितम् ।

७५० पर्यन्ते हिम-शैल-दुष्ट-शिखराख्यन्तः कदर्यं जलं
नित्यं दुर्दिनमेव दुर्जवमलंभ्योऽन्ये जना दुर्भगाः ।
कः काश्मीरमिदं स्तरे यदि पुनर्वत्स्यात् सुरीगन्नरु-
क्यो गंध्यास्पद-सुज्वलं तु घुसृणं(?) श(fol. 64a)क्रादि-देव-
स्पृहम् ॥ २ ॥ वेणीदत्तस्य ॥

॥ (३१) अथ धन-स्तुतिः ॥

७५१ धनमर्जय काकुत्स्थ धन-मूलमिदं जगत् ।
अन्तरं नैव पश्यामि[1] निर्धनस्य मृतस्य च ॥१॥ वशिष्ठस्य ॥

७५२ तिर्यक्तां व्रजतु प्रतारयतु वा धर्म-क्रिया-कोविदं
हन्तु स्वां जननीं पिबत्वपि सुरां शुद्धां वधूमुज्झतु ।
वेदान्निन्दतु वा हिनस्तु जनतां किंवाऽनया चिन्तया
ल[1]क्ष्मीर्यस्य गृहे स एव भजति प्रायो[2]जगत्पूज्यताम् ॥२॥
कविकङ्कणस्य ॥

॥ (३२) कृपणः ॥

७५३ प्रतिबिम्बमपि ग्रहीतुमीशः
पुरुषः स्यान्निज-पृष्ठमीक्षितुं च ।
न मितम्पच-[1]मुष्टि-वर्ति-वित्त-
ग्रहण-प्रेक्षण-कर्मणो विधातुम् ॥१॥ चिन्तामणेः ॥

---

७५१ । 1 MS. मिति । SR. v. 11, p. 52; SRB. v. 3, p. 64.

७५२ । 1 MS. लं० । 2 MS. प्रयो । SRB. v. 35, p. 63, v. r. a. तिर्यक्त्वं भजतु । d...जगद्वन्द्यताम् ।

७५३ । 1 MS. मितं पंच ।

७५४ कोषे निषण्णस्य च वज्र-मुष्टे-
मलिम्लुचाकार-विभीषणस्य ।
आकारतः केवलमस्ति भेदः
कृपाणकस्यापि धनानकस्य ॥२॥ पद्मावत्याः ॥

॥ (३३) [ अथ ] धन-निन्दा ॥

७५५ श्री-समेता न जानन्ति प्रायशोऽन्यस्य वेदनाम् ।
भूमि-भार-भराक्रान्ते शेते[1]ऽनन्ते सुखं हरिः ॥१॥ कस्यापि ॥

॥ (३४) [ अथ ] अर्थी ॥

७५६ जन-स्थाने भ्रान्तं कनक-मृग-तृष्णान्धित-धिया[1]
वचो वै देहीति[2] प्रतिपदमुदश्रु प्रलपितम् ।
कृता लङ्काभर्तुर्वदन-परिपाटी(fol. 64b)षु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ १ ॥
जगज्जीवन-व्रज्यायाः ॥

---

७५४ । See Sanskrit Poetesses, Part A, 2nd. edition, v. 52, p. 23.

७५५ । 1 MS. शेखे ।

७५६ । 1 MS. बन्धितया । 2 MS. वेदेहीति । SSV. v. 3264, p. 538 ; SMV. v. 5, p. 441 ; SUK. 53. 5, p. 312, ( शूलपाणेः ) । SR, v. 19, p. 70, v. r. a…मृगतृष्णाकुलतया । c…रचना । SRB. v. 33, p. 73, v. r. a…मृगतृष्णाकुलतया । SHV. 2434. AR. p. 297—98. KS p. 127 ; KPradīpa, p. 139. SD. pp. 240—241. SHV. v. 938.

॥ (३५) [ अथ ] दरिद्रः ॥

७५७ उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः ।
बाल-वैधव्य-दग्धानां कुल-स्त्रीणां कुचा इव ॥१॥ कस्यापि ॥

७५८ वरं गरल-भक्षणं वरमरण्य-पर्णाशनं
वरं जलधि-मज्जनं वरमतीव दिग्वासता[1] (?) ।
वरं पतनमद्रितो मरणमेव वाऽभक्षणा-
न्न निर्धन-जनस्य वै हत-मनोरथं जीवितम् ॥ २ ॥
वेणीदत्तस्य ॥

॥ (३६) अथ खलः* ॥

७५९ दुग्धैः पोषित-मानसोऽपि बहुशो मुग्धान्तरैर्लालितः
स्निग्धैश्चन्दन-बिन्दुभिर्विरचितः श्वासोऽपि दिग्धाशयः ॥
स्पृष्टश्चेन्मनसा मनागपि रुषा हालाहलं निक्षिपन्
वक्त्रान्निर्दहति स्वभाव-मलिनो व्यालः खलस्तत्क्षणात् ॥१॥
वेणीदत्तस्य ॥

७६० मित्रोदये म्लायति निर्निमित्तं
दोषागमे द्योतत एव सद्यः ।
सम्बन्ध-मात्रेण दहत्यवश्यं[1]
खलेऽनले वा कतमो विशेषः ॥२॥ वाहिनीपतेः ॥

---

७५७ । SSV. v. 3435, p. 562, v. r. d···स्तना इव । SP. v. 401, p. 60 ; SRB. v. 1, p. 65.

७५८ । 1 MS. ताम् ।

* In the MS., this heading is given after v. 759.

७६० । 1 MS. दत्यवश्यं ।

७६१ क्रम: प्राप्तो मित्रं तत उदयमेत्यैव[1] कुटिल:
कलानाथस्तस्याभिमुखमुदयन्[2] मण्डलधर: ।
तथाभूतो भूयस्तदनुसरण:......
शशी सिद्धि:[3] कुत्र स्फुरति वद मित्रद्रुहि जने ॥ ३ ॥
कविकङ्कणस्य ॥

७६२ तापं द(fol. 65a)दानोऽपि खल-प्रवादो
नान्त:प्रवेशं महत: प्रयाति ।
शोषं वितन्वन्निव हेति-जालै-
र्वारांनिधेर्वाडव-वीतिहोत्र: ॥ ४ ॥

७६३ हृद्योऽपि सद्वृत्त-विभूषितोऽपि
प्रोद्गाढ-तारुण्य-मदोन्नतोऽपि ।
खल: प्रकामं कठिनाशयत्व-
माप्नोति वक्षोज इवाऽऽयताक्ष्या: ॥५॥ माधवस्यैतौ ॥

७६४ स्वभाव-सिद्धं वक्रत्वं खलस्य च हलस्य च ।
मुखाक्षेपं तयो: सोढुमलमेकैव सा क्षमा[1] ॥६॥ पद्मावत्या: ॥

७६५ अन्तर्मलिन-संसर्गाच्[1]छ्रुतवानपि दुष्यति ।
यच्चक्षु:सन्निकर्षेण कर्णोऽभूत् कुटिलाशय: ॥ ७ ॥
कृष्ण-पण्डितस्य ॥

---

७६१ । 1 MS. उदयत्यैव । 2 MS. मुद्दयन् । 3 MS. सिद्धिं ।

७६४ । 1 MS. क्षसा । See Sanskrit Poetesses, Part A, 2nd. edition, v. 53, p. 24.

७६५ । 1 MS. ०संसर्गा ।

॥ (३७) [ अथ ] कुपुरुषः ॥

७६६ नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते
नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति ।
किञ्चित् क्वापि न साहसं वितनुते गेहे चिरं दूयते
नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥१॥

भानुकरस्य ॥

॥ (३८) [ अथ ] कुपुत्रः ॥

७६७ दहइ पिआ-सरीरं खेदइ माअं दुनोइ सुहृदाईं ।
रुक्खो होइ कुपुत्तो विरहच्चातीव दूसहो हिअप् ॥ १ ॥

७६८ नो विद्वज्जन-संसदि प्रविशति प्रौढिं न चालम्बते
नो[1] वा मित्र-सुहृज्जनोक्तिषु मनाग् धत्ते नि(fol.65b)जं वा मनः ।
नो वा पौरुषमातनोति नितरां गेहे परं दूयते
भार्यां स्वां जननीं दुनोति कुमतिः कोऽप्येष निर्णीयताम् ॥२॥

वेणीदत्तस्यैतौ ॥

॥ (३९) [ अथ ] कुपण्डितः ॥

७६९ अबुहः बुहाणं मज्झे कव्वं जो पढइ लक्खण-विदूणम् ।
भुअग्गखग्गलग्गोहिं सीसं खुलिअं ण जाणेइ ॥ १ ॥

पिङ्गलस्य ॥

---

७६६ । 1 MS. कुपुरुषं ।

७६८ । 1 MS. no नो ।

॥ (४०) अथ पण्डितः ॥

७७० इह तुरग-शतैः प्रयान्तु मूर्खा

धन-रहिता विबुधाः प्रयान्तु पद्भ्याम् ।

गिरि-शिखर-गतापि काक-पङ्क्तिः

पुलिन-गतैर्न समत्वमेति हंसैः[1] ॥१॥ भर्तृहरेः ॥

७७१ अस्तग्रथापि चतुःसमुद्र-परिखा-पर्यन्त-भूमण्डलं

सन्त्यन्येऽपि विदग्ध-वाक्य-रसिकाः[1] केचित्तु भूमीभुजः ।

एकः कश्चिदनादरो भवति चेदन्यो भवेत् सादरो

वाग्देवी वदनाम्बुजे वसति चेत् को नाम दीनो जनः ॥२॥

सुभाषित-मुक्तावल्याः ॥

॥ (४१) अथ सुपुत्रः ॥

७७२ पात्रं न तापयति नैव मलं प्रसूते

स्नेहं न शोषयति नैव गुणान् क्षिणोति ।

---

७७० । 1 MS. हसैः । S′P. v. 198, p. 32, v. r. b. धन-रहितास्तु बुधाः । SRB. v. 23, p. 39, v. r. a⋯मूढा । b. as in S′P.

७७१ । 1 MS. oरसिका । SR. v. 9, p. 130, v. r. a... पर्यन्तमुर्वीतलं । b. वर्तन्तेऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः । c, एकस्तत्र निरादरो⋯। SRB. v. 15, p. 85, v. r. same as in SR.

७७२ । SR. v. 3, p. 142, v. r. b. स्नेहं न संहरति⋯। d. सत्पुत्र एष कुल-सद्मनि⋯। SRB. v. 13, p. 90, v. r. b. same as in SR ; c. द्रव्यावसानसमये चलतां⋯। d. सत्पुत्र एष कुल⋯।

दोषावसान-रुचिरस्खलतां न धत्ते

सत्पुस्तकः सुकृत-सद्मनि कोऽपि दोषः ॥ १ ॥

प्रभाकर-भट्टानाम् ॥

॥ (४२) अथ हारः ॥

७७३ अन्येऽपि सन्ति गुणिनः कति नो जगत्यां

हार त्वमेव गुणिनामुपरि(fol. 66a)स्थितोऽसि ।

एणीदृशामुरसि नित्यमवस्थितोऽसि[1]

सद्वृत्तता च शुचिता च न खण्डिता ते[2] ॥ १ ॥

शङ्करमिश्रस्य ॥

७७४ सद्वृत्त-विशदस्यापि गुणिनः सुप्रभस्य च ।

सुहितस्यापि[1] सन्त्रासः समयेनेश्वरेच्छया ॥ २ ॥

वेणीदत्तस्य ॥

॥ (४३) अथेक्षुः ॥

७७५ शकलीकृतोऽपि बहुशो यन्त्र-पुटे पीडितोऽतिभृशम् ।

आवमति रसमिहेक्षुर्मधुरं ग्रन्थि-विद्धोऽपि ॥

॥ (४४) अथ सिता ॥

७७६ आबद्धाऽतिकठोरै रश्मि-भरैः पीडिताऽश्मचयैः ।

आमर्दितापि चरणैः परमिह मधुरैव चूर्णितापि सिता ॥ १ ॥

वेणीदत्तस्यैतौ ॥

---

७७३ । 1 MS. एणीदृशासु स्वयन्नमवस्थितोऽसि । 2 MS. जे ।

७७४ । 1 MS. सुहितस्यापि ।

॥ (४५) अथ सरस्वती ॥

७७७ अनक्षरं रूपमिह क्षरन्ती
पञ्चाशदर्णै[1]रमृताब्ध-पूर्णैः ।
व्याकर्णि विध्यस्तमदान्तराला (?)
शब्दात्मिका मामवतात् समन्तात् ॥१॥
वेणीदत्तस्य ॥

७७८ यस्याः[1] स्वरूपमखिलं ज्ञातुं ब्रह्मादयोऽपि न स्रष्टाः ।
कामगवी सुकवीनां[2] सा जयति सरस्वती देवी ॥२॥ केरल्याः ॥

॥ (४६) अथ काव्य-प्रशंसा ॥

७७९ यस्याश्चोरश्चिकुर-निकरः कर्णपूरो मयूरो
भासो हासः कविकुल-गुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदय-वसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविता-कामिनी कौतुकाय ॥ १ ॥
जगज्जीवनस्य[1] व्रज्यायां जयदेवस्य ॥

---

७७७ । 1 MS. पञ्चाशवर्णै० ।

७७८ । 1 MS. यस्या । 2 MS. शुकवीनां । See Sanskrit Poetesses, Part A, 2nd edition, v. 36, p. 15.

७७९ । 1 MS. जगज्जिवनस्य । SMV. v. 112, p. 49, v. r. b. हासो भासः । d. नैषा कविषु कविता । जयदेवस्य । SRB. v. 68, p. 37.

७८० चित्रेण वर्ण-निचयेन विरोचमानं
शुद्धोज्ज्वलै[1]रपि गुणैः कृत-गाढ-बन्धम् ।
सहृ(fol. 66b)यमुत्कावविधेः(?) प्रथितं[2] निदानं
काव्यं वितानमिव कस्य न ताप-शान्त्यै ॥ २ ॥
चन्द्रचूडस्य ॥

७८१ सहोदराः कुङ्कुम-केसराणां
भवन्ति मन्ये कविता-विलासाः ।
न शारदादेशमपास्य[1] दृष्ट-
स्तेषां यदन्यत्र मया प्ररोहः ॥३॥ विह्लणस्य ॥

७८२ परिवट्टइ विस्राणं[1]संभाविज्जइ जसो विठप्पन्ति गुणाः ।
सुणिए सुपुरुष[2]चरित्रं ता किं ण[3] कुव्वन्ति कव्वालावा ॥४॥
कालिदासस्य ॥

७८३ घ[1]नाश्लेष-रसाढ्या(?) सद्भावार्द्रा गुणोज्ज्वला सरला ।
अभिमत-पात्रमलब्ध्वा सीदति कविता च वनिता च ॥५॥
दामोदरस्य ॥

---

७८० । 1 MS. सुधोत्वलै० । 2 MS. पृथितं ।

७८१ । 1 MS. अवाप्य । SRB. v. 29, p. 31.

७८२ । 1 MS. विणाणां । 2 MS. वुपुरुष । 3 MS. यम । KS´. p. 401, l. 17, v. r. a. परिवट्टइ b. विज्जइ...विटप्पन्ति गुणा । c. अव्वइ सुपरिसु··· । d. कित्तं जेण हरन्ति··· ।

७८३ । 1 MS. म ।

७८४ नाह्नतापि पुरः पदं रचयति प्राप्नोपकण्ठं हठात्
पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते ।
वैवर्ण्यं स्वर-भङ्गमञ्चति बलान्मन्दाच्च[1]-मन्दानना
कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी नवोढायते ॥ ६ ॥

कृष्णपण्डितस्य ॥

७८५ विद्वत्[1]सत्-कवि[2]-हेमकार-घटितं सत्काव्य-मुक्ता-गुणं
विद्वांसः कलयन्तु भूषणमिदं कर्णे सुवर्णोज्ज्वलम् ।
लोहं दोषमपास्य[3] बुद्धि-निकषेणालोक्य सद्वर्णनं[4]
स्वच्छ-व्याकरणाख्य-तण्डुल-जल-प्रक्षालितं भूरिशः ॥७॥

वेणीदत्तस्य ॥

॥ (४७) अथ कवयः ॥

७८६ अनाराध्य कालीमनास्वाद्य गौडी-
मृते मन्त्र-तन्त्रादिना शब्द-चौर्यात् ।
प्रबन्धं प्रगल्भं प्रकर्तुं प्रवृत्तो
विरिञ्चि-प्रपञ्चे मदन्यः कविः कः ॥ १ ॥

अकबरीकालिदासस्य ॥

---

७८४ । 1 MS. मदाच्च । SRB. v. 13, p. 101. ARK. p. 39, v. r. b...( मञ्चति ) तमां (मन्दा)...। d...( प्रतिभावतो )ऽप्यधिसभं...।

७८५ । 1 MS. द्विवत्० । 2 MS. सत्कवि० । 3 MS. दोष-समाश्य । 4 MS. सद्वर्णानां ।

७८७ बिन्दु-द्वन्द्व[1]तरङ्गिताग्रसर[2]णिः कर्ता शिरोबिन्दुकं
कर्मेति-क्रम-शिक्षि(fol. 67a)तान्वय-कथा[3] ये केऽपि तेभ्यो नमः ।
ये तु ग्रन्थ-सहस्र-शाण-कषण-त्रुट्य[4]त्कलङ्कै[5]र्गिरा-
मुल्लासैः कवयन्ति विल्हण-कविस्तेष्वेव सन्नह्यति ॥ २ ॥

विल्हणस्य ॥

७८८ गणेश्वर-कवेर्वचोविरचनैक-वाचस्पतेः
प्रसन्न-गिरि-नन्दिनी-चरण-पल्लव[1]ध्यायिनः ।
तथा जयति भारती भगवती[2] यथा सा सुधा
मुधा भवति सुभ्रुवामधर-माधुरी म्लायति ॥ ३ ॥

गणपतेः ॥

७८९ यशोधन-निधेर्यदा नरहरेर्वचो वर्ण्यते
तदा गतमदा मदालस-मराल-बालारवाः[1] ।
न विभ्रमचरीकरी भवति चाधरी माधुरी
सुधाकर-सुधा मुधा मधु-कथा वृथा जायते ॥ ४ ॥

गणपति-पुत्र-भानुकरस्य ॥

७९० माध्वी-माधुर्य-धारामधरयति सुधा-साधुतां व्याधुनीते
वैदग्ध्यं दुग्धराशेर्विधुरयति विधोर्दीधितीर्धिक् करोति ।

---

७८७ । 1 MS. विद्वद्वन्द्व । 2 MS. श्रितर० । 3 MS. करा ।
4 MS. द्य । 5 MS. कै ।

७८८ । 1 MS. वा । 2 MS. भावती ।

७८९ । 1 MS. ०मलाबालाररवाः ।

मुग्धा-मुग्धाधरान्तं तिरयति मधुप-ध्वान-धूतिं विधत्ते
मध्वौद्धत्यावघातं रचयति[1] सरसो यस्य वाचां प्रपञ्चः ॥५॥

सदाशिवस्य ॥

(४८) शृङ्गारस्य[1] निरूपितकल्पत्वाद्वी[2]रादयो निरूप्यन्ते[3] ॥

॥ (१) अथ वीर-रसः ॥

७८१ संग्रामाङ्गणमागते दशमुखे सौमित्रिणा संस्मितं
सुग्रीवेण विचिन्तितं हनूमता व्यालोलमालोकितम् ।
श्रीरामेण परन्तु पीन-पुलक-स्फूर्जत्-प्रकोष्ठ[3](fol. 67b)श्रिया
सान्द्रानन्द-रसालसा निदधिरे बाणासने दृष्टयः ॥१॥ मुरारेः[4] ॥

॥ (२) अथ करुण[1]रसः ॥

७८२ पाथो वहत्येव कलिन्द-पुत्री
वृन्दावनं विद्यत एव तावत् ।
चरन्ति गावो विचरन्ति गोप्यो
नास्ति व्रजे कृष्ण कथं प्रतीमः ॥१॥ चिन्तामणेः ॥

७८३ अनुवनमनुयान्तं बाष्प-वारि त्यजन्तं
मुदित-कमलदाम-श्याममालोक्य रामम् ।
दिनमपि रवि-रोचिस्तापमन्तः प्रपेदे
रजनिरपि च तारा-बाष्प-बिन्दून् बभार ॥ २ ॥

भानुकरस्य ॥

---

७८० । 1 MS. वयति ।

७८१ । 1 MS. स्या । 2 MS. द्दा । 3 MS. ते । 3 MS. no ष्ठ । 2 MS. no visarjanīya.

७८२ । 1 MS. णा ।

७८४ यस्याः कुसुम-शय्यापि कोमलाङ्ग्या रुजाकरी ।
साऽधिशेते कथं देवी ज्वलन्तीमधुना चिताम् ॥३॥ दण्डिनः ॥

७८५ उत्खात[1]-दैवतमिवाऽऽयतनं पुरारे-
रस्ताचलान्तरित-सूर्यमिवान्तरिक्षम् ।
हम्मीर-भूभुजि गते सुरवेश्म विश्वं
पश्यामि हारमिव नायक-रत्न-शून्यम् ॥४॥ देवेश्वरस्य ॥

७८६ नार्यो[1] रुदन्ति न रुवन्ति[2] पतङ्ग-संघा
गावस्तृणानि न चरन्ति न वान्ति वाताः ।
भृङ्गाः पिबन्ति न मधूनि हरौ प्रयाते
निर्जीविता इव दिशः[3] प्रतिभान्ति शून्याः ॥ ५ ॥
कृष्णपण्डितस्य ॥

॥ (२) अथा[1]द्भुत-रसः ॥

७८७ किं ब्रूमो हरिमस्य विश्वमुदरे किं वा फणान्[2] भोगिनः
शेते यत्र[3] हरिः स्वयं जलनिधेः सोऽप्ये[4]कदेशे स्थितः ।

---

७८४ । S´P. v. 3997, p. 610 ; SRB. v. 68, p. 596, v. r. d···हुताशनवतीं चिताम् ।

७८५ । 1 MS. वात । S´P. v. 4004, p. 611, v. r. b·· चन्द्रमिवान्तरिक्षम् ।

७८६ । 1 MS. नार्या । 2 MS. रुचन्ति । 3 MS. दिसः । 4 MS. थ ।

७८७ । 1 MS. धौ । 2 MS. फलृणा । 3 MS. यस्य । 4. MS. सोधौ० । S´P. v. 4025, p. 615 ; SMV. v. 49, p. 390, v. r.

आश्चर्यं कलसोद्भवो मुनिरसौ यस्यैक-हस्तेऽम्बुधि-
गंण्डूषीयति पङ्कजीयति फणी भृङ्गीयति

श्रीपतिः(fol. 68a) ॥ १ ॥

कस्यापि ॥

७९८ आश्चर्यं मधुरान्तिके द्रवमयी काचित्तमःकन्दली
तस्यास्तीर-गतापि काचन घनश्यामाकृतिश्चन्द्रिका ।
सा राधा-मुखपद्म-बोधनकरी रात्रिन्दिवं द्योतते
तामेव प्रतिपद्य शुष्यतितरां संसार-वारांनिधिः ॥ २ ॥

दैवसिद्धि-वेदिनः ॥

॥ (४) अथ हास्य-रसः ॥

७९९ प्रातः प्रकाममहिफेन-रसं निपीय
वृद्धो वृतः शिशु-गणैः प्रलपन् वचांसि ।
आघूर्णयन्नयनमाकुलयन्मुखेन्दु-
मुद्भ्रामयन् वपुरुपैति नृपस्य वेश्म ॥१॥ भानु[1]करस्य ॥

८०० उपभुक्त-खदिर-वीटक-जनिताधर-राग-भङ्ग-भयात् ।
पितरि मृतेऽपि न वेश्या रोदिति हा तात तातेति ॥ २ ॥

रामजितः ॥

---

a...किं वा फणी...। b...सोऽप्येकदेश-स्थित- । SUK. 13. 2, p. 235, v. r. a फणी...। c...कलसोद्भवोऽम्बुधिरयं यस्यैक-हस्तोदरे । SR. v. 1, p. 334 ; SRB. v. 22, p. 363.

७९९ । 1 MS. मनु० ।

८०० । SRB. v. 32, p. 364, ( क्षेमेन्द्र ) ; SR. v. 11, p. 356.
... ... ... वीटकनिजा । b. धरज...।

८०१ भ्रुकुटीकुटिल-ललाटः कण्टकिताङ्गः कटाक्ष-विकटाक्षः ।
कवलयति पृथुल-कवलैरोदनमचलं द्विजः क्रुद्धः ॥३॥
शार्ङ्ग[1]धरस्य ॥

८०२ पुरीषस्य च रोषस्य हिंसायास्तस्करस्य च ।
आद्याक्षराणि संगृह्य वेधाश्चक्रे पुरोहितम् ॥४॥ क्षेमेन्द्रस्य ॥

८०३ वापुंसि-मुखि वक्षस्ते वपि-द्वन्द्व-विराजितम् ।
पुंसश्चाभाग्यवन्तस्य पिता मरति यौवने ॥५॥ जगज्जीवनस्य॥

॥ (५) [ अथ ] भयानक-रसः ॥

८०४ किञ्चित्कोप-कला-कलाप-कल[1]ना-हु[2]ङ्कार-दृप्यद्भ्रुवो-
र्विक्षेपादकरोदसौ रघुपतिर्लङ्कापु(fol. 68b)तेः पत्तनम् ।
क्रन्दत्-फेरु रणत्-करेणु विदद्द्वारु स्फुरद्गुग्गुलु
प्रक्रीडत्-कपि निश्वसत्-फणि रणज्झिल्लि स्फुरद्द्वीपि च ॥१॥
वररुचेः ॥

---

८०१ । MS. साङ्ग । S'P. v. 4032, p. 616,

८०४ । 1 MS. no ल । 2 MS. ह । S'P. v. 4070, p. 621, v. r. a…कलनाहंकार-विभ्रद्भ्रुवो । c…रटत्करेट्ठ विचटद्दारु…। d…भ्रमद्द्वीपि च । मुरारेः । SMV. v. 7, p. 319, v. r. a… कलहाहङ्कार-बिभ्रद्भ्रुवो । c…रटत्करेणु विचटद्दारु । d…भ्रम-द्वीपिच । महानाटकात् । SRB. v. 6, p. 365, v. r. a…हुंकार-विभ्रद्भ्रुवो । c…रटत्करेटु विघटद्दारु स्फुटद्द । d. प्रोत्क्रीडत्… भ्रमद्द्वीपि च ।

॥ (६) अथ वीभत्स रसः ॥

८०५ विकीर्ण-हरिचन्दन-द्रविणि यत्र लीलालसा
निपेतुरतिचञ्चलाश्चतुर-कामिनी-दृष्टयः ।
तदेतदुपरि भ्रमन्निविड-गृध्र-जालं जनै-
र्लुठत्क्रमि-कलेवरं पिहित-नासिकैर्वीक्ष्यते[1] ॥ १ ॥

इन्द्रकवेः ॥

८०६ यः प्रचण्ड-भुज-दण्ड-मण्डितो
नो कटाक्ष-तलमानयद्धरिम्[1] ।
सो (?) गतासुरधुना महीतले
दुष्ट-कीट-क्रमिभिर्विपाट्यते ॥ २ ॥

८०७ या पूर्वं हरिचन्दन-द्रव-लसत्-काश्मीर-कस्तूरिका-
स्वामोदागुरु-चर्चितोज्ज्वलतनुर्वाराङ्गनेयं बभौ ।
सैवाशीर्ण-शरीर-मध्य-विलस[1]द्विष्ठा-क्रमि-व्याकुला
दुर्गन्धा विग[2]तासुरुत्कट-रटत्क्रोष्टु-व्रजैर्भक्ष्यते[3] ॥ ३ ॥

वेणीदत्तस्यैतौ ॥

---

८०५ । 1 MS. वीक्षते । SP. v. 4078, p. 623, v. r. a··· लीलारसा । b. निपेतुरलि···। SMV. v. 10, p, 329, v. r. b. निपेतुरलि···। SRB. v. 2, p. 366.

८०६ । 1 MS. हरि ।

८०७ । 1 MS. add. r. र after स । 2 MS. क । 3 MS. भक्षते ।

८०८ कुष्ठी विष्ठानुलिप्तः क्रिमि-कुल-कलितः पूय-पूराभियुक्तः
संयुक्तो मक्षिकाभिः कर-धृत-विसरन्निम्ब-शाखोग्र-गन्धः ।
जानुप्रोथोष्ठनासः[1] स्रवदरुण-गलत्पाणिपादः समन्ता-
न्निष्ठीवल्लोक-दृष्टः कलयति मनुजः कोऽपि दुष्कर्म-भोगम्[2] ॥४॥

पद्मावत्याः ॥

॥ (७) अथ रौद्र-रसः ॥

८०९ चञ्चद्भुज-भ्रमित-चण्ड-गदाभिघात-
संचूर्णितोरु-युगलस्य सुयोधनस्य ।
स्त्यानावबद्ध-घन-शोणित-शोण-पा(fol. 69a)णि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥१॥

[ भट्ट- ] नारायणस्य ॥

८१० क्रीडा-तुङ्ग-तुरङ्ग-टाप-पटली-खर्वीकृतोर्वीधर-
श्रेणी-स्फूर्जित-धूलि-धोरणि-तमस्तोमावलीढं जगत् ।
युद्ध-क्रुद्ध-करीन्द्र-वृन्द-चरण-व्याभुग्न-भोगीश्वर-
व्यग्रोदग्र-फणाग्र[1]रत्न-रुचिभिर्विद्योतयामः पुनः ॥ २ ॥

भानुकरस्य ॥

---

८०८। 1 MS. व्यानुग्रोष्ठोत्थनासः। 2 MS. भोजम्। See Sanskrit Poetesses, Part A, 2nd. edition, v. 69, p. 30.

८०९। ŚP. v. 4085, p. 624; SRB. v. 3, P. 366; DR. P. 9, v. r. c. स्त्यानावनद्ध···। DL. p. 97; KŚ. p. 92, v. r. same as in DR. SD. p. 302; v. r. c. स्त्यानावनद्ध···।

८१०। MS. य।

॥ (८) अथ शान्त-रसः ॥

८११ अहौ वा हारे[1]वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ट्रे वा कुसुम-शयने वा दृषदि[2] वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः[3]
क्वचित् पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥ १ ॥

जगज्जीवन-व्रज्यायाः ॥

८१२ परीरम्भारम्भ-स्खलदलक-वक्त्राम्बुज-रुचां
तृणीकृत्य स्त्रीणा[1]मभिनव-सुधा-मुग्धमधरम् ।
कदा काश्यामस्यामुपवन-लता-कुञ्ज-कुहरे
नमस्यामो दामोदर तव पदाम्भोरुह-रजः ॥ २ ॥

भानुकरस्य ॥

८१३ निदाघे संसारे बहुलतर[1]-दुःखातप-भृते
सुखच्छाया-हीने तनु-सरसि शुष्केऽतिचपलः ।

---

८११ । 1. MS. होरे । 2. MS. दषदि । 3. MS. no visarjanīya. SSV. v. 3413, p. 559, v. r. a.…कुसुम-शयने वा वा दृषदि वा । b…बलवति रिपौ वा सुहृदि वा । c…यान्ति (दिवसाः) । d. कदा… । S'P. v. 4102, P. 627, भर्तृहरेः । SRB. v. 40, p. 368, v. r. d. क्वचित् पुण्यारण्ये । SUK. 60. 5, p. 317, v. r. d…पुण्यारण्ये । PT. v. 180, p. 44, v. r. A 2 b, same as in SSV, Vairāgya-s'ataka, v. 40 ; KPradīpa, p. 90, v. r. a and b, same as in SSV.

८१२ । 1 MS. स्तनणा ।

८१३ । 1 MS. ततर । 2 MS. शिखि । 3 MS. नं ।

परिक्षीणो दीनो नव-वन-कटाक्षामृत-भरे
मनोमीनो लीनो भवतु मम पीनो ननु शिवे[2] ॥ ३ ॥

प्रभाकर-भट्टाना[3]म् ॥

॥ अथ शान्तस्य पश्चात्तापः ॥

८१४ धन्यानां गिरि-कन्दरे निवसतां ज्योतिः परं ध्यायता-
मानन्दाश्रु-जलं पिबन्ति शकुना निःशङ्कमङ्के स्थिताः ।
अस्माकन्तु मनोरथोपर[1]चित-प्रा(fol.69b)साद-वापी-तट-
क्रीडा-कानन-केलि-कौतुक-जुषामायुः प[2]रं क्षीयते ॥ १ ॥

जगज्जीवन-व्रज्यायाः ॥

८१५ क्षौणी-पर्यटनं श्रमाय विदुषां वादाय विद्याऽर्जिता
मान-ध्वंसन-हेतवे परिचितास्ते ते धराधीश्वराः[1] ।
विश्लेषाय सरोज-सुन्दर-दृशामास्ये[2] कृता दृष्टयः
कुज्ञानेन मया प्रयाग-नगरे नाऽऽराधि नारायणः ॥ २ ॥

भानुकरस्य ॥

---

८१४ । 1 MS. रि । 2 MS. ग । SMV. v. 9. P. 439, a…गिरि-कन्दरोदर-भुवि…। d…केलि-मन्दिरसदामायुः… । भर्तृहरेः । SUK. 58. 3, p. 315, v. r. a…गिरि-कन्दरोदर-भुवि… । d…केलि-मण्डल… । सत्यबोधस्य । SRB. v. 220, p. 374, v. r. b…निःशङ्कमङ्के शयाः । PT. v. 290, v. r. b. ( मानन्दाश्रु ) पयः… ( निःशङ्क)मङ्के शयाः ।

८१५ । 1 MS. रा । 2 MS. स्यै । SRB. v. 229, p. 375, v. r. a. क्षोणी… । PT. v. 296, v. r. c…दृशामास्ते… ।

८१६ उत्खाय चित्तोपवनात्[1] सुमेधोमाला कृता पुस्तक-निष्कुटेषु ।
काव्य-द्रुमाणामधिरोपितानां फलं परां निर्वृतिमुन्नयामः ॥३॥
चिन्तामणेः ॥

८१७ असारे संसारे विषम-विष-पाके नृप-सुखे
कृतान्तेनाचान्ते प्रकृति-चपले जीवित-बले ।
ध्रुवापाये काये विषय-मृगतृष्णा-हत-हृदः
स्व[1]रप्राणैः प्राणानहह परिमुष्णन्ति[2] कुधियः ॥४॥
श्रीकृष्ण-पण्डितस्य ॥

॥ अथ शान्तस्य (?) ॥

८१८ [1]पुत्र-मन्दिर-कलत्र[1]-मेदुरं
मे दुरन्तमिव भासते जगत् ।
तन्निवेदय दया-मनोहरं
नो हरं स्मरसि चेतसा कुतः ॥ १ ॥ बिन्दोः[2] ॥

८१९ किं मुधा नयसि कालमाकुलं
मा कुलं कुरु निजं क[1]लङ्कितम् ॥
केवलं स्मर शशा[2]ङ्कशेखरं
शोण-रञ्जित-कलेवर-द्युतिम् ॥ २ ॥
भानुकरस्यैतौ (?) ।

---

८१६ । 1 MS. वनायत् ।

८१७ । 1 MS. प्र । 2 MS. वि ।

८१८ । 1 MS. This portion is written after बिन्दोः and followed by किं मुधा, etc. 2 MS. वन्देः ।

८१९ । 1 MS. कु । 2 MS. सा ।

८२० नमस्ते मीमांसे पुनरपि नमो न्याय-नय ते
नमो वो वेदान्ता: प्रणतिरधि[1]का व्याकरण ते।
इदानीं यूयं मामुपदिशत[2] सम्भूय[3] विधिवत्
वलक्षार्धं राधाधव-भगवदाराधन-[4]विधिम् ॥ ३ ॥

॥ (४८) [ अथ ] समस्या[1]ख्यानम् ॥

८२१ अन[1]ङ्ग-बाणाकुलितस्य शम्भोः
शिरो भवानी-चरणेऽतिनम्रम्।
विलोक्य काचिच्चरणी चरन्ती
"पिपीलिका चुम्बति चन्द्र-बिम्बम्" ॥ १ ॥"

ममायम् ॥

८२२ कपट-न(fol. 70a)टन[1]-कोटेर्धूर्जटेः सन्नटस्यो-
द्भट-विकट-जटाभिस्ताडिताः शैल-कूटात्।
खरतर-कर-घातैरुत्थिता दिक्स्थितास्ते
"नभसि निरवलम्ब[2] दन्तिनः[3] सञ्चरन्ति" ॥

कविराजस्य ॥ २ ॥

---

८२०। 1 MS. ति। 2 MS. न्त। 3 MS. सम्भूय। 4 MS. no न।

८२१। 1 MS. समय्या। 1 MS. भ।

८२२। 1 MS. no टन। 2. MS. ०लवं। 3. MS. देतिनः।

८२३ सुता द्रुपद-राजस्य सती-कुल-धुरन्धरा ।
निदाघे पवन-व्याजाद् "वधूः[1]श्वशुरमिच्छति" ॥ ३ ॥
श्रीजगज्जीवनस्य ॥

८२४ धर्म-पुत्रस्य पत्नीयं प्रार्थयन्ती पुनः पुनः ।
व्रतादि-व्याजतो धर्मं "वधूः श्वशुर[1]मिच्छति" ॥ ४ ॥
कविराजस्य ॥

८२५ मामाप मधुहा कस्मात् का हताक्रमते[1]शिरः ।
महिषघ्नी कथं ध्येया "समुद्राङ्गलिरुत्थिता" ॥ ५ ॥

८२६ बडवाग्नि-शिखा-धूमं प्रसमीक्ष्य कपीश्वराः ।
प्रोचुः श्रीरामचन्द्राय "समुद्राङ्गलिरुत्थिता" ॥ ६ ॥

८२७ नित्यं विष्णोर्वसति हृदये का निषेधार्थकः कः[1]
कर्तव्या का त्रिभुवन-गुरोः कोऽव्ययं वक्ति शब्दः ।
दुःखार्थं वा किमिह च पदं सर्वभुक् को हि किं वा
दुःखं पद्मावति वद सतां "मानपूजापहारः" ॥ ७ ॥

८२८ तमो[1]मुखाक्रान्त-समस्त-गात्रं
शशाङ्कमस्मद्विरह-प्रदं त्वम् ।
पश्य प्रियेति प्रणिगद्य मोदिता
"चन्द्रोदये नृत्यति चक्रवाकी" ॥ ८ ॥

---

८२३ । 1 MS. वधू ।

८२४ । वधू श्वसुर० ।

८२५ । 1 MS. क्रामते ।

८२७ । 1 MS. no कः ।

८२८ । 1 MS. ततो ।

८२९ उल्लासितेऽन्धतमस[1]-व्रज एति नाग्रं
सूनै प्रयान्तुग्रभयतोऽतिमरन्द-मुग्धाः ।
सिंहा निहत्य रुधिरं बहु भक्षितं य-
"द्वीपाङ्कुरे मधुकराः करिणं वमन्ति[2]" ॥ ९ ॥

वेणीदत्तस्यैता ॥

८३० सममस्या समस्यापि मोह(70b)मानुष्य-मख्यतः ।
कः काको कः सतो ब्रूहि "स्वर्भ्रंह्रीनो मुधा विधुः" ॥१०॥

कस्यापि ॥

८३१ उन्नादाम्बुद-वर्धितान्ध-तमस[1]प्रभ्रष्ट-दिङ्मण्डले
काले यामिक-जाग्रदुग्र-सुभट-व्याकीर्ण-कोलाहले ।
कर्णस्यासुहृदार्णवाम्बु-वडवा-वक्त्रे यदन्तःपुरा-
दायातासि तदम्बु जाह्नि "क्रतकं[1] मन्ये भयं योषिताम्" ॥११॥

८३२ कस्तूरी जायते कस्मात् को हन्ति करिणां कुलम् ।
किं कुर्यात् कातरो युद्धे "मृगात् सिंहः पलायते" ॥ १२ ॥

अमरस्य ॥

---

८२९ । 1 MS. तमणे । 2 MS. वसन्ति ।

८३१ । 1 MS. नमसि । 2 MS. कृतकं । SRB. v. 68, p. 183, v. r. a…वर्धितान्ध-तमसि ।

८३२ । SR. v. 25, p. 192, v. r. b...करिणां शतम् । d… पलायनम् ।

८३३ कालीनाग-ग्रह-व्यग्रे श्रीकृष्णे यमुना-तटे ।
झम्पयाऽधोमुखे जाते "विपरीतं जगत्त्रयम्" ॥ १३ ॥ तस्यैव ॥

८३४ विशालं नितम्बं मुखं चन्द्र-बिम्बं
सुकेशं सुवेशं सुवासो दधत्याः ।
रसालं वचो नो भवेच्चेद्युवत्या-
"स्ततः किं ततः किं ततः किं ततः किम्" ॥१४॥

८३५ अतिसज्जन-दुर्गतिः खल-पङ्क्ति-समुन्नतिः ।
युवति-स्तन-विच्युतिरि"ति किं विधि-निर्मितिः" ॥ १५ ॥

८३६ शुद्ध-ध्यान-समाधिभिः सुमहसा प्रज्ञा-महाचक्षुषा
नाभौ भक्ति-परो हि कोऽपि च महान्नियन्त्र्य सर्वेन्द्रियम् ।
निष्पन्दोऽप्यरविन्द-बान्धववरं बन्धूक-पुष्पोपम-
"मन्धः पश्यति मध्य-रात्रि-समये पूर्णं रवेर्मण्डलम्" ॥१६॥

८३७ सीता यदा दशमुखेन बलेन नीता
हा राम लक्ष्मण सदेति तदा ब्रुवन्ती ।
अर्कं विलोक्य तरुणं करुणं रुदन्ती
"प्राणेश्वरी प्रियतमं परिहृत्य याति" ॥ १७ ॥

८३८ ब(fol. 71a)हुल-बल-समर्था मेघनादादयो मे
सपदि युधि विशन्तः कीश-हस्ते निपेतुः ।
इति वदति दशास्यो हस्त-तालं वितन्व-
"न्मशक-गलक-रन्ध्रे हस्ति-यूथं प्रविष्टम्" ॥१८॥
कविराजस्यैतौ ॥

---

८३३ । 1 MS. झम्भयाधोमुखं जातं । 2 MS. तत्यैवः ।

८३९.　सकल-भुवन-बीजे नाभि-पद्मे च विष्णो-
निखिल-सृजन-कर्ता तत्र जातोऽब्जयोनिः* ।
असृजदमित[1]शक्त्या स्थावरं जङ्गमन्त-
"र्भ्रमति कमल-मध्ये मत्त-मातङ्ग-सङ्घः"[2] ॥१९॥
कविराजस्यैतौ ॥

८४०　यदैव सीताऽनल-तीक्ष्ण-मध्ये
विवेश तूर्णं मुनि-देव-सन्निधौ ।
पतिव्रता सा पति-वाक्य-पालना-
"द्धुताशनस्पन्दन-बिन्दु-शीतः" ॥ २० ॥

८४१　दूरागतायाः पति-बन्धु-पत्न्याः[1]
स्नेहेन दत्त्वा शिरसीह शीर्षम् ।
मुग्धा भृशं रोदिति[2] शोक-दग्धा
"सिन्दूर-बिन्दुर्विधवा-ललाटे" ॥ २१ ॥

८४२　पूर्णा च दृष्टिः सति सप्तमे गृहे
ज्योतिर्विदः सत्यमितीरयन्ति ।
केतुर्यदाभूद्विधु-सप्तमस्तदा
"ददर्श दर्शे शशिनं कबन्धः" ॥ २२ ॥

---

८३९ । 1 MS. अमति । 2 MS. संद्द्ः । * The line सकल···वि has been repeated before असृजत् ।

८४१ । 1 MS. no visarjanīya. 2 MS. रोदति ।

८४३ मोदन्ते मधु-पान-मत्त[1]-मधुपाः सन्मौक्तिकं कामिनी-
नासा[2]यां परिशोभते प्रकुरुते गम्भीर-धीर-ध्वनिम् ।
कंसारिर्मुरलो खलस्य तु मनो माया जगन्मोहिनो
"जम्बूवज्जल-बिन्दुवज्जलजव[3]वज्जम्बालवज्जालवत्" ॥२३॥

८४४ चेतः सूच्यग्रतस्तत् (fol. 71b) प्रसरति पुरतः
प्राणिनां वर्ग-षट्कं
दुष्पारं कूपरूपं तदुपरि नगराकार-संसार एषः ।
तस्मिन् भाग्योदयाद्वै सुरसरिदभवच्छुद्ध-बुद्धि-स्वरूपा
"सूच्यग्रे कूप-षट्कं तदुपरि नगरं तत्र गङ्गा-प्रवाहः" ॥२४॥

८४५ आरोग्यं चिरमश्विनौ नरपते तोषं शिवः केशवः
कल्याणं तव सर्वदा शशि-रवी प्रोद्दीपनं देवताः ।
ब्रह्माद्याः सकलाः सुभद्रमवनं गौर्यादयो मातरः
"कुर्वाते कुरुते करोति कुरुतः कुर्वन्ति कुर्वन्तु च" ॥२५॥

८४६ श्रीकृष्ण-बाहु-परिघ-प्रहाराकुल-चक्षुषा ।
दृष्टं चानूर-मल्लेन "शतचन्द्रं नभस्तलम्" ॥ २६ ॥

८४७ ।यामोत्काल-करणादधोमौलौ जगन्निधौ ।
तत्कालेऽतिजगुर्लोकाः "स्वर्गोपरि मही बभौ" ॥२७॥

८४८ विवाह-मध्ये तु यदा जगाम
द्वारे गिरीन्द्रस्य शशाङ्कमौलिः ।

८४३ । 1 MS. सत्त । 2 MS. शा । 3 MS. जलवत् ।

अलोकि लोकैः प्रतिबिम्बितानि
"चन्द्रस्य बिम्बे कदली-फलानि" ॥२८॥
वेणीदत्तस्यैतौ ॥

८४९ आलिङ्गनाधर-सुधा-रस-पीनवक्षो
निष्पीडनादि-विधिरस्तु विदूरतस्ते ।
यस्त्वं विलोकयसि चञ्चल-दृङ्‌निपातै-
"रेतावतैव हरिणाक्षि वयं कृतार्थाः" ॥२९॥
वेणीदत्तस्य ॥

॥ (५०) अथ दशावताराः ॥

॥ (१) तत्र मत्स्यः ॥

८५० पुच्छं चेदहमुत्क्षिपाम्यनवधिस्तुच्छोभवेदम्बुधिः
क्रीडां चेत् कलये मनागपि जले पीडा परं यादसाम् ।
निष्पन्दो भृशमामृशन्निति भर ब्रह्माण्ड-भाण्डोदर-
क्षोभं कुञ्चित-वेष एष भगवान् प्रो[1]णातु मीनाकृतिः ॥१॥
रघु[2]नाथोपाध्यायानाम् ॥

८५१ अकुण्ठकण्ठ-गह्वर-स्वर-क्षरत्सदक्षर-
प्रणीत-सर्व-वेद-खेद-हीन-वेदचयप ।
महाकुलीन-ध्यान-पीन-मीन तावकीनता-
···मधीनमङ्घ्रि-भक्तिलीनमङ्ग माम् (?) ॥२॥
रामचन्द्र-भट्टानाम् ॥

---

८५०। 1 MS. पौ। 2 MS. रसु। SRB. v. 12, p. 17, v. r. a. पुच्छं चेदहमुन्नयाम्यनवधिन्तुच्छो··· । c···भान्तु क्षय। d. क्षोभाकुञ्चित··· ।

॥ (२) [ अथ कूर्मः ] ॥

८५२ पायान्मायाजरठ-कमठाधोश्वरो ब्रह्म-नित्या-
धिष्ठानोच्चैर्मठ इव महान् पत्तने पन्नगानाम् ।
धत्ते धन्या यदुपरि धरा शेष-शीर्षोषि[1]तासौ
कन्दोन्मीलनव-कमलिनी-काण्ड-पत्रस्य लक्ष्मीम् ॥
॥१॥ रामचन्द्र-भट्टानाम् ॥

॥ (३) अथ वराहः ॥

८५३ भूयादेष सतां हिताय भगवान् कोलावतारो हरिः
सिन्धोः[1] क्लेशमपास्य यस्य दशन-प्रान्ते नटन्त्या भुवः ।
तारा हारति वारिदस्तिलकति स्वर्वाहिनी माल्यति
क्रीडा-दर्पणति क्षपापतिरहर्देवश्च ताटङ्कति ॥१॥ भानुकरस्य ॥

८५४ यस्य प्रोन्नत-केशरेषु कलितास्तारा: पयोबिन्दुव-
द्दंष्ट्रायामपि चन्द्रमाः सरभ[1]सोत्खाताब्जि[2]नी-कन्दवत् ।
व्योम-व्यापि विभाति लग्नमुभयोर्जम्बालवत् पार्श्वयोः
सोऽयं शर्म करोतु ते प्रतिदिनं कोलावतारो हरिः ॥२॥
घनश्याम-भट्टाचार्यस्य ॥

---

८५२ । 1 MS. शि ।
८५३ । 1 MS. न्धो । SHV. v. 46.
८५४ । 1 MS. no भ । 2 MS. अब्जनी ।

## ॥ (४) अथ नृसिंहः ॥

८५५ पायान्मायामृगेन्द्रो जगदखिलमसौ यत्तनूदन्नदर्चि-
ज्वाला-जालावलीढं वत भु (fol. 32b)वि सकलं व्याकुलं किन्न भूयात् ।
न[1]स्याच्चेदाशु तस्याधिक-विकट-सटा-कोटिभिः पाट्यमाना-
दिन्दोरानन्द-कन्दात्तदुपरि तुहिनासार-सन्दोह-वृष्टिः ॥१॥
रामचन्द्रोपाध्यायानाम् ॥

८५६ दितितनय-रुधिर-दिग्धा नरसिंह-न[1]खाः सुखाय कल्पन्ताम् ।
उदिताः कलाङ्कु[2]रा इव सन्ध्या-रागारुणाः शशाङ्कस्य ॥२॥
रामचन्द्र-भट्टानाम् ॥

## ॥ (५) अथ वामनः ॥

८५७ त्रिजगत्त्रिपदीकृत्य वामनीकृत्य दैत्यजम् ।
त्रिविक्रमं विक्रमयन् वामनो वो[1]मनोमुदे ॥ १ ॥
वेणीदत्तस्य ॥

## ॥ (६) अथ परशुरामः ॥

८५८ बिम्बं चण्डरुचो विधाय परशुं दण्डीकृताहीश्वरं
रामि खेलति खेटकाय कनक-क्षोणीधरं पश्यति ।

---

८५५ । 1 MS. त ।
८५६ । 1 MS. no न । 2 MS. कु ।
८५७ । 1 MS. वा ।

दीर्घ-श्वास-जुषां विलोल-वपुषां विम्लान-वक्त्र-त्विषां
वाष्प-क्षालित-चक्षुषां दिविषदां सेवाञ्जलिः पातु वः ॥ १ ॥

भानुकरस्य ॥

८५८ अकुण्ठधार-भूमिदार-पीठलोठन-
क्षण-ध्वनद्धनत्क्वति-क्वणत्-कुठार-भीषण ।
प्रकामवाम-जामदग्न्यनाम राम-हैहय
प्रयत्न[भरं] निर्दय-व्ययं भयस्य भञ्जय ॥ २ ॥

रामचन्द्र-भट्टानाम् ॥

८६० पुरतः प्रविलोक्य भग्न-चापं
परतः कामपि काम-कार्मुक-ज्याम्[1] ।
पुलकाञ्चित-पीन-बाहु-दण्डः
कुशलं[2] नः कुरुताद्रघु-प्रकाण्डः ॥ १ ॥

प्र[3]भाकर-भट्टानाम[1]यम् ॥

॥ (७) अथ हली रामः ॥

८६१ निष्पात्याऽऽशु हिमांशु-मण्डल((fol. 73a) मधः पीत्वा
तदन्तः सुधां
कृत्वैनं चषकं हसन्निति हलापानाय कौतूहलात् ।
भो देव द्विजराजि मादृशि सुधा-स्पर्शोऽपि न श्रेयसे
मां मुञ्चेति तदर्थितो हलधरः पायादपायाज्जगत् ॥ १ ॥

रामचन्द्रोपाध्यायस्य ॥

---

८६० । 1 MS. त्यांस । 2 MS. ल । 3 MS स । 4 MS. मा ।

वाँदिव सरिद्वरा सेयमितुग्रहिधोर्षा:
-वेगाकलित-हल-हठोत्क्षेपिण: क्षेम-हेतु: ।
ु दालारस-विवश[1]हृद: स्रंस[2]दंसोत्तरीयं
तिर्यग्व्यस्ता[3]ङ्घ्रि भूय: स्खलनमथ लघूत्या[4]नमाधावनं तत्
॥२॥ हरिहर-भट्टानाम् ॥

॥ (८) अथ बुद्ध: ॥

८६३ अधर्म-साधनं वृथा मुधा न जन्तु-हिंसनं
स्रजन्तु वेद-निन्दया भजन्तु केवलं दयाम् ।
इति प्रबोधयन् विधिं विधाय[1]वैदिकं विधिं
विशुद्ध-बोध-बन्धुरन्तरेधि बुद्धदेव न: ॥१॥
रामचन्द्र-भट्टानाम् ॥

८६४ माया-बद्ध-कुतूहले भगवति व्यालोलयत्यागमा-
नोङ्कारेण भयातुरेण चलितं विन्दु[1]विहाय क्वचित् ।
ओङ्कार: कर-पञ्जरं पुरभिदो[2] भेजे त्रिशूलच्छला-
द्बिन्दुश्चक्र-मिषेण कैटभरिपोस्तस्थौ कराम्भोरुहे ॥ २ ॥
भानुकरस्य ॥

---

८६२ । 1 MS. स । 2 MS. सर्म । 3 MS. स्त । 4 MS. धान ।

८६३ । 1 MS. या ।

८६४ । 1 MS. न्दु: । 2 MS. मुरभिजो ।

॥ (९) अथ कल्की ॥

८६५ यवनी-नयनाम्बु-धोरणीभि-
धरणीनामपनीय ताप-वह्नीन् ।
सुकृत-द्रुम-सेकमाचरन्तं
धृत-कल्कं प्रणमामि निर्विकल्पम् ॥ १ ॥

॥ (१०) अथ कृष्णः ॥

८६६ गोपी-कटाक्ष-कज्जल-नील(fol. 73b) मिवेन्दीवरच्छायम् ॥१॥
मधुवन-बाल-सहायं नन्दकुमारं सदा नौमि । १ ।

भानुकरस्य[1] ॥

जगज्जीवनस्य ॥

॥ (१० क) अथ वर्हावतंसः ॥

८६७ सौन्दर्यराशेर्मधुसूदनस्य
वर्हावतंसः सुतरां विरेजे ।
विलोकिकानां व्रजसुन्दरीणा-
मैक्यं गता[1]नीव विलोचनानि ॥ १ ॥

जगज्जीवनस्य ॥

॥ (१० ख) अथ मुरली ॥

८६८ मुरली[1] जयति मुरारेस्तरलीकृत-मानिनी-हृदया ।
रुचिराङ्गुलि-नव-दलिनी जीवन-वल्लीव पञ्चबाणस्य ॥१॥

वेणीदत्तस्य ॥

---

८६६ । 1 MS. This ought to follow v. 865.

८६७ । 1 MS. तां ।

८६८ । 1 MS. मुरवी ।

॥ (५१) अथ लक्ष्मीः ॥

८६९ सानन्दं कुरुविन्द-सुन्दर-तरुच्छायां कपोल-स्थली-
मालोक्याङ्कुरितोत्सवेन सुरतारम्भे पुनः शौरिणा ।
पायाद्वः कर-पल्लवेन कुतुकाकृष्टांशुका[1]या मिथो
लक्ष्म्या नील-सरोरुहाञ्जलिरिव क्षिप्ता दृगन्तावलिः ॥ १ ॥

हरिहर-भट्टानाम् ॥

॥ (५२) अथ गङ्गा ॥

८७० जडता जडतामम्ब पङ्कः पङ्कं व्यपोहतु ।
भ्रान्तिस्तव मम भ्रान्तिमधोगतिरधोगतिम् ॥ १ ॥

मद्गुरोः[1] ॥

८७१ निम्नगासु न ते तुल्या नीचेषु च न मे समः ।
मयि प्रपतनं मातर्विधातुं किं विलम्बसे ॥ २ ॥

स्मरपुङ्गवस्य ॥

८७२ निर्गुणापि सगुणा यतस्तरि[1]-
स्तद्गमाक्षिपथगे समागतम् ।
त्वं करोषि सगुणं हि निर्गुणं
नोचितं तदिह ते जगद्धिते ॥ ३ ॥

हरिनारायण-मिश्राणाम् ॥

---

८६९ । 1 MS. ला ।
८७० । 1 MS. राः ।
८७२ । 1 MS. रि preceded by ह्र ।

८७३ कार्णाटी-स्वर्ण(fol. 74a)कर्णाभरण-परिमिलन्मौक्तिकेष्वब्ध लेशै-
यस्याः सम्पृक्तमात्रे ष्विदम[1]जनि महच्चित्रमुच्चण्डमेव ।
सङ्कीर्णं ताम्रपर्णी-जल-लहरि-भरैरर्णवोऽशुक्लपो (?) यत्
सार्धं क्रीडन्ति शच्या शमयतु विपदोऽङ्काय सा जाह्नवी नः ॥४॥

८७४ आरूढो वास-यष्टिं गृह-वलभि-तले दुष्ट-मार्जारकेण
क्रूरास्यं ग्रस्यमानः सकृदपि शनकैर्यद्विचुक्रोश कीरः ।
गङ्गेति स्वामिनीं स्वामयममरपतेर्लब्धवानासनार्धं
यस्तु त्वं स्रोतसाम्भः स्पृशति स्मरति वा तत्कथां के विदन्तु ॥५॥
हरिहर-भट्टस्यैतौ ॥

॥ (५३) अथ यमुना ॥

८७५ उत्तालापीत-हालारस-विवश-मनोवृत्ति-तालाङ्क-सीर-
प्रोत्खाताकृष्ट-कालागुरु-रुचिर-रुचिः स्रोतसोन्मादशीला ।
अच्छच्छण्डीद्वीपवन्दी-भवदखिल-चलत् कान्दिशीकोग्रनक्रा
कालिन्दी वोऽस्तु सन्दीपित-सुकृत-चयोद्रेक-मन्दीकृतैनाः ॥१॥
हरिहर-भट्टानाम् ॥

॥ (५४) अथ वेणी ॥

८७६ कालिन्दी-केशपाशः परिलसति मही-नायिकायास्तनूजा
जह्नोः सत्पुण्य-सङ्गी गुण इह सलिलं यच्च सारस्वतन्तु ।

---

८७३ । 1 MS. no म ।

वेणी त्वेषा विशेषादमरवर-लसत्स्नेह-युक्ता वियुक्ता
बन्धे[1]नैत्यत्र चित्रं विलसति नितरां यत्तमोवर्ण-हीना ॥१॥
श्रीजगज्जीवनस्य ॥

८७७ उरीकर्तुं तुहिन-किरण-प्रीति-धारामुदारां
दूरीकर्तुं दिनकर-कर-क्लेश-बाधामगाधाम् ।
यस्याः पुण्ये पयसि विशति स्नातुकामा त्रियामा
प्रायस्तस्यास्तिमिर-ततिभिः श्यामलं नीरमस्याः ॥२॥
भानुकरस्य ॥

८७८ पश्यन्नेतां चपल-शफरी-लोचनां पङ्कजास्यां
कोकद्वन्द्व-स्तनभर-नतां बाल-शैवाल-केशीम् ।
भृङ्ग-श्रेणी-मधुर-वचनां राजहंस-प्रचारां
मारेणाहं क्षणमिह पुनः प्रेयसीं स्मारितोऽस्मि ॥ ३ ॥
कृष्ण-पण्डितस्य ॥

॥ (५५) अथ प्रकीर्णम् ॥

८७९ सुमुखी यदि कारवी-प्रसून-
स्तवकं विस्मित-मानसाभिपश्येत् ।
तदजस्रमधोमुखोऽपि तस्या
वदनं वीक्षितुमुत्सुको भवेत् सः ॥ १ ॥

८८० विजतेऽभिमुखी प्रियमन्यतमं[1]
विसहेत वद व्रजनाथ कथम् ।

८७६ । 1 MS. बन्धे ।
८८० । 1 MS. ध्रु ।

प्रसमीक्ष्य निजं क्रुधमञ्चति या
मुकुरे भवतः प्रतिबिम्बमपि ॥ २ ॥
चिन्तामणेः ॥

॥ (५६) अथ विदायः ॥

८८१ क्षौडामूलं दुकूलं दलित-रिपु-महीपाल-वृन्दं गजेन्द्रं
दत्त्वा तुङ्गं तुरङ्गं विरचय वसुधा-नाथ तावद्विदायम् ॥
युष्मत्सत्कारभाजं दिशि दिशि[1] चकितैः प्रेक्ष्य मामक्षि-पातै-
र्वक्षोजाभोग-भूमौ विलुठतु पुलक-श्रेणिरेणेक्षणानाम् ॥
भानुकर-मिश्रस्य ॥ १ ॥

८८२ रुद्रः पश्यति वारणं प्रतिदिनं सूर्यो हयं शङ्कते
वित्तेशो निज-वित्त-रक्षण-परः सा कामधुग्वे पते ।
**लक्ष्मीसेन** नरेश मा कुरु सुहृदेवानिमान् व्याकुलान्
स्वैर्वित्तैर्म[1]धुसूद[2]न-द्विजपतेः शीघ्रं वि[3]दायं कुरु[4] ॥ २ ॥
मधुसूदन-मिश्रस्य ॥

८८३ बाले मा कुरु भाले कस्तुरी-पङ्क-तिलक-लेपम् ।
कवरी-मिष-सञ्चारी चन्द्रारिः सम्प्रति स्फुरति ॥ ३ ॥
वेणीदत्तस्य ॥

८८४ उग्ररूपं कुच-द्वन्द्वं हार-गङ्गाधरं तव ।
चन्द्रचूडं करिष्यामि कुरु तावद्दिगम्बरम् ॥४॥ कविराजस्य ॥

---

८८१ । 1 MS. one दिशि omitted. PT. v. 63.

८८२ । 1 MS. स्वै । 2 MS. च । 3 MS. ति । 4 MS. नु ।

॥ [अथ] पतङ्गः ॥

८८५ ज्योतिरिङ्गण कथं न लज्जसे
द्योतनाय जगतो हि सज्जसे
एतदेव बहु किं न मन्यसे
यत्त्वमत्र तिमिरेषु गण्यसे ॥ ५ ॥

॥ अथ दीपः ॥

८८६ हनूमानिव दीपोऽयं दूरमुत्साहिताञ्जनः ।
किन्तु राम इवाभाति निकृन्तित-दशाननः ॥ ६ ॥

भवदेवस्य ॥

८८७ धनञ्जय-समुद्भूतः सुभद्रोत्साह-वर्धनः ।
अभिमन्युवदाभाति दीपः कृष्ण-पुरःसरः ॥ ७ ॥

पद्मावत्याः ॥

८८८ उद्दीपितोऽपि कनक-द्युति-मञ्जुलोऽपि
स्नेहान्वितोऽपि सुदशोऽपि सुवर्तितो[1]ऽपि ।
कान्ता-करान्तर-कुचच्छवि-मण्डितोऽपि
स्वाभाविकीं मलिनतां न जहाति दीपः ॥ ८ ॥

वेणीदत्तस्य ॥

---

८८६ । SUK. 148. 4, p. 165, v. r. b. दूरमुल्लसिताञ्जनः d. विनिर्धूत । कस्यचित् ।

८८८ । 1 MS. सुवृत्तितो ।

८८९. यावज्ज्वलति चन्द्रिका शशधरे यावच्च गौरी हरे
यावद्भूमिरहीश्वरे रुचिकरी यावत् प्रभा भास्करे ।
यावच्चापि रतिः स्मरे जलधिजा यावच्च दामोदरे
तावत् पद्य-तरङ्गिणी विजयतां मत्पद्यवेणीरियम् ॥ ९ ॥

इति श्रीजगज्जीवनात्मज-वेणीदत्त-कृता पद्यवेणी

समाप्ता ॥

